# THE
# HARIDAS SANSKRIT SERIES
# 55.



# THE
# DĀNADĪPIKĀ

*With the—*

BHĀVABODHINI HINDI COMMENTARY

*By*

*Pandit S'rī Sudāmā Mis'ra*



*Edited by the Author.*

PUBLISHED BY

JAYA KRISHṆA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office.*

Benares City

1936.

* श्रीः *

हरिदास-संस्कृत-ग्रन्थमाला

५५

( द्वादशमासान्नादिदानप्रयोगात्मिका )

भावबोधिनीभाषासहिता

# श्रीदानदीपिका

श्रीमद्राजकुमारवंशावतंसराजर्षिश्रीशशिधरसिंहदेववर्ममहोदयस्याज्ञ-
या साहाय्येन च काशीस्थश्रीहाराणचन्द्रशास्त्रिचरणाना-
मन्तेवासिना रायबरेलीमण्डलान्तर्गतटिकारीराज-
धानीस्थश्रीचन्द्रभानुपाठशालाप्रधानाध्याप-
केनोक्तराजभवनेऽनुष्ठेयदेवपितृकार्येषु
प्राप्ताचार्य्यकेण

पण्डितश्रीसुदामामिश्र-

शास्त्रिणा निर्म्मिता संशोधिता च ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

सं० १९९३ वै.

# समर्पणम्

वेदध्वानविधूयमानदुरितः-

श्रद्धाविशुद्धाध्वरो,

न्यायव्याकृतिसांख्ययोगकविता-

वेदान्तसिद्धान्तवित् ।

धैर्यौदार्य्यगभीरतामृदुलताऽऽ-

चारादिनानागुणो,

गौरीशङ्करशर्म्मशुक्लविबुधो-

विभ्राजते भारते ॥

तं गुरुं हृदये ध्यात्वाऽनिशं शम्भुस्वरूपिणम् ।

समर्पये शशिधरस्तन्मुदे दीपिकामिमाम् ॥



# काशीस्थसर्वमान्यविदुषां सम्मतयः । *

श्रीश्रीगौरकृष्णः शरणम् ।

## आधिकाशि

श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौम-
साहित्यदर्शनाद्याचार्य्यन्यायरत्नतर्करत्न-

## गोस्वामिदामोदरशास्त्री

"विहार"जनपदान्तर्गत"मुजफ्फरपुर"प्रान्तीयलालगञ्जवास्तव्येन वाराणसेयराजकीयविद्याऽऽलयतोऽवाप्त"व्याकरणशास्त्रि"पदवीकेन पण्डितश्रीसुदाममिश्रेण मदीयच्छात्र"महामहोपाध्यायकविचक्रवर्तिसुकुलश्रीदेवीप्रसादशर्मतो धर्मशास्त्रादिकमधीत्य,

स्वालङ्कर्मीणतया "रायबरेली"पत्तनस्थायां "टिकारी"राजस्याभिरूपगृह्यरूपस्यानेकगुणशेवधेः श्रीशशिधरसिंहदेववर्मणः पाठशालायामध्यापकेषु लब्धप्राधान्येन स्मृतिशास्त्रपरिशीलनपटिमन्यधिगतिनोक्तराजभवनेऽनुष्ठेयधर्मसंपृक्तयावत्कार्येषु प्राप्ताचार्य्यकेण निर्मितं "दानदीपिका"निबन्धमवेक्ष्य; प्रमोमुद्यमानमानसः संभावयँश्च सत्स्वपि दानसंबद्धविवेच्यविषयकानेकपुस्तकेषु मासभेदात् प्रधानत्वेन दातव्यान्नभेदव्यवस्थापनायामस्यैवेदंप्रथमतां, कामयमानश्च जगदीश्वरानुकम्पयेतो लोकानां फलेग्रहितां, निर्मातारं चेदृगुपकृतिनिबन्धनसुकृतौपयिकं सर्वपथीनं क्षेममनुभवँश्चिरमेष जीवतादित्याशिषाऽभिनन्दयति । इति शम् ।

---

युक्त देशान्तःपातिरायबरेलीमण्डलान्तर्गतटिकारीभूमिपतिश्रीशशिधरसिंहदेवमहोदयस्याज्ञया साहाय्येन च तदाश्रितपण्डितेन मदीयान्तेवासिना

---

* ग्रन्थाकारवर्द्धनेन सर्वेषां विदुषां सम्मतिं प्रकाशयितुमक्षमः । केवलं तेषां हस्ताक्षराणि प्रकाश्यन्ते, इति पाठकमहानुभावैर्बोद्धव्यम् ।

श्रीसुदामामिश्रेण निर्मिता दानदीपिका मया समवलोकिता। समीचीनेयं दीपिका सुप्रचारिता चेद् भवेत्तदाऽऽस्तिकजनानां परमोपकाराय परमानन्दाय च भविष्यतीति मन्यते—

काशीस्थो—

**श्रीहाराणचन्द्रभट्टाचार्य्यः।**

( वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यापकमहोदयः। )

**श्रीविद्याधरशर्ममिश्रः**—( "वेदाचार्य्यः" काशीस्थहिन्दूविश्वविद्यालयधर्मविभागप्रिन्सिपलमहोदयः। )

**श्रीगोपालशास्त्री नेने**—( काशीस्थराजकीयसंस्कृतमहाविद्यालयाध्यापकमहोदयः। )

**श्रीमदनमोहनशास्त्री**— ( काशीस्थमारवाडिसंस्कृतमहाविद्यालयाध्यक्षमहोदयः। )

**श्रीनारायणशास्त्री खिस्ते**—( "साहित्याचार्य्यः" "साहित्यवारिधिः" काशीस्थराजकीयसरस्वतीभवनोपाध्यक्षमहोदयः। )

**श्रीगणेशदीक्षितजाऊजिभट्टः**—( काशीस्थसाङ्गवेदविद्यालययजुर्वेदाध्यापकमहोदयः। )

**पं० श्रीत्रिभुवननाथमिश्रः**—( "व्याकरणसाहित्यमीमांसाऽऽचार्यः" काशीस्थगोयनकामहाविद्यालयाध्यापकमहोदयः। )

**पं० श्रीशिवबालकशुक्लः**—( काशीस्थजोखीराममटरूमलगोयनकामहाविद्यालयाध्यापकमहोदयः। )

श्रुतिस्मृतिपुराणादिधर्मशास्त्रप्रमाणालङ्कृतस्य दानदीपिकाग्रन्थस्य प्रशंसनीया सरणिः। अनेन धान्यदानादिषु सर्वेषामुपकारो भविष्यतीति धर्मपरायणैः संग्राह्यः।

**शु० गौरीशंकरशास्त्री—**

राजगुरु टेकारीराज्य।

# प्रस्तावना।

सन्तु किलानेकधा सप्रणामं धन्यवादाः परमात्मपरब्रह्मणे श्रीमन्नारायणाय, येन दयार्द्रचेतसा संसारार्णवनिमग्नानां कामक्रोधाद्यतिक्रूरमकरादिभिर्भूयो भूयोऽभ्यवह्रियमाणान्तःकरणाङ्गानां मोहादिबृहत्तरतरङ्गपरिचालनपरिक्लिश्यमानमानवानामुपकृतिकृते स्वाज्ञारूपाश्चत्वारो वेदाः प्रादुर्भावयामासिरे, यत एव च पुराणादीनामप्याविर्भाव इति। ततश्च परश्शताः सन्तु धन्यवादा महर्षिप्रवराय परमदयोदयाय श्रीवादरायणाय, येन महात्मना कालकलोपनतबुद्धिह्रासालस्यादिभिर्वेदार्थज्ञानतद्बोधितकर्म्मानुष्ठानासमर्थानामल्पीयःप्रयासैर्भवाब्धिमुत्तितीर्षूणां श्वोवसीयाय भगवदवतारादिसच्चरितसद्धर्मप्रपूरितानि सत्कथागुम्फितान्यष्टादशपुराणानि महाभारतादीतिहासा अन्येऽपि स्मृतिग्रन्थाः प्राणायिषत। तत्र च दानधर्म-राजधर्म-भागवतधर्मा-द्यनेकधर्म्मव्याख्यानावसरे सत्य-शौच-दया-दाना-त्मकचतुष्पदो धर्म्मो व्याख्यातः, स एव दरीधर्त्ति धरित्रीम्।

एतर्हि कलिजाधर्मवशात्पदत्रयभङ्गे दानमेवावशिष्टम्, 'दानमेकं कलौ युगे' इत्युक्तेः। दोषनिधौ कलौ "कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत्" अर्थात् कुशलानि पुण्यानि आशु सङ्कल्पमात्रेण फलन्ति, इतराणि पापानि आशु न सिद्ध्यन्ति, यतस्तानि कृतान्येव सिद्ध्यन्ति न तु सङ्कल्पितमात्राणीति पाराशर्यपादा आहुः श्रीभागवते। अतो येन केन प्रकारेण दत्तं दानं कल्याणकृद् भवति श्रीमद्भगवद्गीतायाम्—"यज्ञदानतपःकर्म्म न त्याज्यं कार्यमेव तत्। नियतस्य तु संन्यासः कर्मणो नोपपद्यते॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः। क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा॥" इत्यादि श्रीभगवदुक्तेश्चातुराश्रम्ये एवं

चातुर्वर्ण्येऽपि यज्ञदानतपःकर्मणो नोपेक्षणीयताऽस्ति, 'पावनानि मनीषिणाम्' इत्युक्त्वा सर्वेषां पावनत्वात्। किन्तु इयानेव भेदः—ब्रह्मचारिगृहिभ्यां तु लोकस्य स्वस्य चोपकारार्थं सकामत्वेन तथेतरैर्लोकसङ्ग्रहार्थं निष्कामत्वेन एतान्याचरितव्यानि। एतत्कर्मत्रितयमध्यवर्त्ति दानपदं देहलीदीपकन्यायेन उभयोर्यज्ञतपसोः फलदायकमपीति सोसूच्यते। तथाऽत्र कलौ विशेषतयाऽन्यमहर्षिमतानुसारेण दानमेव सर्वश्रेयस्करम्। यज्ञतपसोर्विषये मतभेदेऽपि नात्र मतभेदः, यवनानां गुरुण्डानां पारसीकानामार्य्याणामनार्य्याणां केषामपीति निर्विवादम्।

परस्वत्वोत्पत्त्यन्तो द्रव्यत्यागो दानपदार्थः। बहुविधाभिर्दानमुक्तम्, तत्रान्नदानमाहात्म्यं सर्वदानमतिशाशय्यते। यथोक्तं श्रीकृष्णचन्द्रेणैव युधिष्ठिरं प्रति भविष्योत्तरे—"अन्नमेव परं दानं सत्यवाक्यं परं पदम्। बुद्धिश्चार्थात्परो लाभः सन्तोषः परमं सुखम्॥" इत्यादि बहुशो वर्णनादन्नदानस्यैव माहात्म्यप्राचुर्य्यम्। प्रत्यक्षेऽपि यथा मुखे निक्षिप्तं रत्नहेमादि प्राणधारणं न करोति, किन्तु जग्धं सदन्नमेव लोकान्पाति। गीतायाम्—अन्नाद् भवन्ति भूतानीति प्रतिपादनान्निखिलदानमूर्द्धन्यभागेऽन्नदानमेव वरीवर्त्ति, चरीकर्ति च सकलकामनासिद्धिमिति समन्ततः प्रसिद्धमेव।

किमनल्पजल्पनेन, प्रकृतमनुसरामः—मेषमकरसङ्क्रान्त्योस्तदानुकूल्येन वैशाखमाघमासयोर्यवोत्थसक्तुकृसरान्नदानं यथोपलभ्यते, तथाऽवशिष्टासु दशसु संक्रान्तिषु मास्सु च प्रतिमासं पृथक्पृथक्कानि कान्यन्नानि देयानीति निर्णयवचनं निर्णयसिन्धुधर्मसिन्धुमदनपारिजातहेमाद्र्यादिनिबन्धग्रन्थेषु नासाद्यते, शिष्टोपदिष्टवचनानि पुण्यकालात्मकानि तु संप्राप्यन्ते। परं च तत्तत्पुण्यकालौपयिकान्नदानं सिद्धान्तितं नाधिगम्यते। अतः समस्तवैदिकधर्म्मावलम्बिजनेहितप्रपूरणाय तदूनतादोषनिवारणाय एकत्रैव मासपरकविहितान्नदानोचितस्मार्तवचनलाभाय च शास्त्रविचारचारुचरितसौशील्यौदार्य्याद्यनेकसद्गुणार्जितयशोधवलीकृतदिङ्मण्डलच्छात्र-

धर्मरक्षणैकदक्षाणामवधप्रान्तगतरायबरेलीमण्डलान्तर्वर्त्तिटिकारी-राज्याधिपश्रीमत्कान्हकुलतिलकसंस्कृतप्राकृताङ्गलयवनभाषामर्मज्ञ-कवित्वशक्तिसम्पन्नश्रौतस्मार्तकर्म्मानुष्ठानपरायणाध्यात्मिकतत्वप-रिशीलनपरविद्वत्प्रियश्रीशशिधरसिंहबहादुरमहोदयानां द्रव्यप्रदा-नादिविविधसत्कारकरणैतद्ग्रन्थप्रकाशनप्रोत्साहनाप्रवचनगवेषणा-रूपसाहाय्येन काशीस्थराजकीयप्रधानविद्यालयीयाशेषशास्त्राध्यापक-भट्टाचार्यश्रीहाराणचन्द्रशास्त्रिणामन्तेवासिविहारप्रान्तान्तर्गतमुजफ्फ-रपुरमण्डलस्थलालगंजवास्तव्यटिकारीराजधानीस्थश्रीचन्द्रभानुपा-ठशालामुख्याध्यापकस्मार्तक्रियाकुशलश्रीसुदामामिश्रशास्त्रिभिर्निर्म्मिता वेदपुराणादिसम्मताऽसौ दानदीपिका नूनं विज्ञजनमानसानि आह्ला-दयिष्यतीति भक्तेष्टपूरणपटुं श्रीहरिं मूर्ध्ना प्रणमन् विरमति—

श्रीमतां विपश्चितां वशंवदः,

**दामोदरशुक्लः,**

टेकारीराज्यान्तःपात्यठेहाग्रामवास्तव्यः ।

# भूमिका ।

"दानमेकं कलौ युगे" महर्षि पराशरके इस वचनसे कलियुगमें वर्णा-श्रमधर्मानुयायी मनुष्यमात्रके लिये दान मुख्य कहा गया है। वह दान बहुत प्रकार का है, पर उनमें अन्नदान सर्वोपरि है। स्कन्दपुराणमें व्यास जी ने कहा है—"अन्नं प्रजापतिः साक्षादन्नं विष्णुः शिवः स्वयम्। तस्मा-दन्नसमं दानं न भूतं न भविष्यति ॥" अर्थात् अन्न साक्षात् ब्रह्मा-विष्णु-शिव–रूप है, इसलिये अन्नदानके समान दूसरा दान न हुआ और न होगा। इसीतरह "अन्नं वै प्राणाः"—"अन्नदानादसून्निष्क्रीणाति" अर्थात् अन्न प्राण ही है, जो अन्नदान करता है मानो वह प्राणदान ही करता है। इत्यादि श्रुति स्मृति पुराणादि के परिशीलन से अन्नदान का महत्व, सब दानों से अधिक विदित होता है। यह अन्नदान ब्राह्मण से लेकर चांडाल तक को दिया जा सकता है। हमलोगों के सौभाग्य से इस पवित्र भारतवर्ष में बहुत प्रकार के अन्न उत्पन्न होते हैं।

किन्तु उनमें जब कि सत्तू और खिचड़ी, ये दो ही अन्न—मेष मकर की संक्रान्ति तदनुसार वैशाख माघ महीने में–शास्त्रतः प्रचलित है। अवशिष्ट दश महींने में शास्त्रानुसार किस किस अन्न का दान करना चाहिये, ऐसी जिज्ञासा अन्नदानके महत्व जानने वाले प्रत्येक पुरुषों के हृदय में हो सकती है। प्राचीन निबन्ध–ग्रन्थों में मेष मकर की तरह सभी मासमें, भिन्न भिन्न अन्नके दानका वचन उपलब्ध नही होता। अतः श्रुति स्मृति पुराण आदि धर्मग्रन्थों की एकवाक्यता और काशीस्थ सर्वमान्य विद्वानों की अमूल्य सम्मति से यह "दानदीपिका" नाम का ग्रन्थरत्न आप विज्ञजनों के सम्मुख उपस्थित किया जा रहा है।

इसमें बारहो महीने में बारह प्रकार के अन्न के दान का निर्देश है। प्रमाणापेक्षी पुरुषों के संतोषके लिये प्रत्येक मास में मूलवचन, दानका संकल्प-

वाक्य, दानमन्त्र और सभी मासके दानोपयोगी संक्षिप्त दानविधि वैशाख के आरंभ में लिख दी गई है। इसमें अन्नदानके अतिरिक्त–औषधदान, पुस्तकदान और गोपरिचर्या आदि उपयुक्त विषय भी दिये गये हैं। सर्व साधारणके उपयोगके लिये टिप्पणी सहित मूलग्रन्थ की सरल भाषाटीका कर देना उचित समझा है। टिप्पणी का भाव भाषाटीकामें [ ] ऐसे कोष्ठ के भीतर है। सम्भव है टीका लिखने में आर्ष वचनोंका जहाँ तहाँ भावापहरण हुआ हो, इस महाअपराध पर सहृदय विज्ञजन क्षमा प्रदान करेगें।

अन्तमें—टेकारीराज्याधीश श्रीमान् राजकुमारवंशावतंस परमोदार राजर्षि श्रीशशिधर सिंह देव महोदयको शतशः धन्यवाद है, जिनके हृदय में "श्री" की महती अनुकंपासे इस विषयकी न्यूनताकी सर्वप्रथम स्फूर्ति हुई और जिन्होंने मुझे अनेक प्रकारकी सहायतासे उत्साहित किया। मैं गुरुवर्यों एवं विद्वानोंके चरणसरोरुह में नतमस्तक हो रहा हूं, जिन्होंने अपनी अमूल्य सम्मतिसे धार्मिक जनताके समक्ष इस ग्रन्थरत्न को रखने का साहस प्रदान किया है। "विद्याविलास प्रेस" के अधिपति श्रीमान् बाबू जयकृष्णदासजी, व्रजजीवनदासजी और सर्वप्रिय कृष्णदासजी को सधन्यवाद शुभाशीर्वाद देता हूं, जिन्होंने अपने अपने अधिकृत कार्योंमें आलस्य त्याग कर शीघ्र ही इस ग्रन्थ का प्रकाशन करके सद्गृहस्थों का परमोपकार किया है। आशा है धार्मिक जनता इसे आदर की दृष्टि से देखेगी।

## दोष–दर्शकों के प्रति

निवेदन है कि शुद्धिपत्रिका देने पर भी भ्रम या छपते समय मात्रा आदि के टूट जाने से जो अशुद्धियां रह गई हों, उसे अपनाते हुये इस परिश्रम को सफल करेगें। इति शम्।

कृपाभाजन—

**श्रीसुदामामिश्र।**

# श्रीदानदीपिकास्थसंक्षिप्तविषयानुक्रमः ।

# दानदीपिकायाः शुद्धिपत्रिका ।

| अशुद्धिः | शुद्धिः | पृ० | पं० |
| --- | --- | --- | --- |
| सन्यासियों | संन्यासियों | २ | १८ |
| दशः | देशः | ७ | ८ |
| यदाश्वर | यदीश्वर | १३ | ५ |
| यथौक्त | यथोक्त | १४ | १२ |
| स लोकेषु | सर्वलोकेषु | १६ | ८ |
| (३) क्षत्रिये | (१) क्षत्रिये | २० | १ |
| ,, | ,, | २० | १३ |
| (४) ब्राह्मणे | (२) ब्राह्मणे | २० | १ |
| ,, | ,, | २० | २२ |
| क(५)लम् | फ(१)लम् | २२ | ९ |
| ,, | | २२ | २१ |
| ब्रह्मवीज | ब्रह्मबीज | २८ | २ |
| द्वादशा | द्वादशी | ३५ | १३ |
| निष योजनम् | निष्प्रयोजनम् | ४२ | १० |
| भविष्य० | (ग)भविष्य० | ४६ | ५ |
| धान्यमानम् | धान्यादिमानम् | ४६ | ५ |
| धान्य का | धान्यादि का | ४६ | १३ |
| यत्त | यत्तद् | ४८ | १३ |
| स्त्वभि तं | स्त्वभिमतं | ५४ | १३ |
| क्षाण | क्षीण | ७० | ९ |
| सिह | सिंह | ७४ | १७ |
| शुल्काष्टमी | शुक्लाष्टमी | ८० | ९ |

* श्रीः *

॥ श्रीशः शरणम् ॥

अथ

# श्रीदानदीपिका

जयति मञ्जुलमङ्गलकारिणी,
भगवती भवभीतिनिवारिणी ।
महिषमुख्यमहासुरमारिणी,
विदितविन्ध्यगिरीन्द्रविहारिणी ॥ १ ॥
नान्नदानात्परं दानमिति शास्त्रनिदर्शिका ।
दर्व्याऽन्नदाननिपुणा साऽन्नपूर्णा प्रसीदतु ॥ २ ॥
किं किं धान्यं प्रयच्छेम मासु चैत्रादिषु क्रमात् ।
एतन्निर्णयसम्बद्धां कुरुते दानदीपिकाम् ॥ ३ ॥

## तत्रादौ दानमाहात्म्यम् ।

( क ) ऋग्वेदे—

उच्चादिवि दक्षिणावन्तो अस्थुः ।

---

मंजुल मङ्गल मूल मुनि मानित महित महान ।
महिषमर्दिनी मातु पद बन्दौं मुद मन मान ॥

## दान माहात्म्य ।

( क ) ऋग्वेद-दान देने वाले स्वर्ग में निवास करते हैं ।

( ख ) सामवेदोपनिषदि—

दानेन सर्वान्कामानवाप्नोति ।

( ग ) शतपथश्रुतौ—

दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥

( घ ) यमः—

यतीनां तु शमो धर्मस्त्वनाहारो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥

( ङ ) मात्स्ये—

दानमेव परो धर्मो दानमेव परं तपः ।
न हि दानात्परतरमिह लोके परत्र च ॥

( च ) अगस्त्यः—

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही ॥

---

(ख) सामवेदोपनिषद्–दान से सब मनोरथ पूर्ण होता है। (ग) शतपथश्रुति–दान से सुखी, वृद्धों की सेवा से मेधावी और अहिंसा से आयुष्मान् होता है–ऐसा महर्षि लोग कहते हैं। (घ) यम–सन्यासियों की शान्ति, वानप्रस्थों का अनाहार अर्थात् उपवास, गृहस्थों का दान और ब्रह्मचारियों की गुरु–सेवा ही परमधर्म है। (ङ) मत्स्यपुराण–दान ही परम धर्म और परम तप है, इस लोक और पर लोक में दान से बढकर दूसरा कार्य नही है। (च) अगस्त्य–गाय, ब्राह्मण, वेद, सती, सत्यवादी, निर्लोभी और दानी

( छ ) पाराशरः—

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥

इति दानमाहात्म्यम् ॥

## अथ सर्वेषु दानेषु अन्नोदकादिदानस्य वैशिष्ट्यम् ।

( क ) तदाह, हारीतः—

आपो ददत्तृषमभिजयत्यात्मानं च निष्क्रीणाति ।
अन्नदानादसून्निष्क्रीणाति अन्नवानन्नादोऽन्नपतिश्च भवति॥

( ख ) विष्णुः—

मधुघृततैलदानेनारोग्यमौषधप्रदाने च ।
लवणदानेन लावण्यं धान्यप्रदानेन तुष्टिः ।
सस्यदानेन च तथा इन्धनदानेन दीप्ताग्निर्भवति सङ्ग्रामे सञ्जयमाप्नोति ॥

---

ये सात, पृथ्वी को धारण किये हैं । (छ) पाराशर का कहना है कि सत्य युग में तप, त्रेता में ज्ञान, द्वापर में यज्ञ और कलियुग में दान मुख्य है । इति दान माहात्म्य ।

### सब दानों में अन्न जल आदि दान की विशेषता ।

( क ) उसे हारीत कहते हैं कि—जलदाता प्यास को जीतता है मानो आत्मा को ही देता है, अन्नदाता मानो प्राणों को ही देता है और वह अन्न का स्वामी होता है । (ख) विष्णु-शहद, घी, तेल और औषध के दान से आरोग्य, नमक के दान से सौन्दर्य, यव आदि धान्य के दान से तुष्टि, धान तथा लकड़ी के दान से

( ग ) मनुः—

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥

( घ ) विष्णुधर्मोत्तरे—

व्रीहीणां सस्यजातानां दानात्स्वर्गमवाप्नुयात् ।
यवप्रदानेन नरः शक्रलोके महीयते ॥
तथा गोधूमदानेन वसूनां लोकमाप्नुयात् ।
प्रियो भवति लोकस्य प्रियङ्गुं यः प्रयच्छति ॥
ददाति यस्तु श्यामाकं प्रीताः स्युस्तस्य देवताः ।
मुद्गदः शक्रलोकं तु यमलोकं तु माषदः ॥
यथेष्टलोकमाप्नोति तिलदानान्न संशयः ।
षष्टिकान्नप्रदानेन लोकं नैर्ऋतिकं ल(१)भेत् ॥
सचीनचणकं दत्त्वा लोकं वारुणमाप्नुयात् ।

जठराग्नि तेज होती है, अर्थात् अग्निमांद्य नही होता एवं युद्ध में विजय पाता है । (ग) मनु–जलदाता तृप्ति, अन्नदाता परम सुख, तिलदाता इच्छानुकूल संतान और दीपदाता उत्तम नेत्र पाता है । (घ) विष्णुधर्मोत्तर–दाता खेत में लगे धान्यों के दान से स्वर्ग और यवदान से इन्द्रलोक में पूजित होता है, वैसे ही गेंहू के दान से वसुओं का लोक पाता है । जो काकुन देता है वह संसार

( १ ) लभेदिति परस्मैपदमनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् । तथा च परिभाषास्वरूपं परिभाषेन्दुशेखरे–'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति । अनित्यत्वे मानं तु चक्षिङो ङित्करणमेव । वृत्तभङ्गभयादिति तु नाशङ्क्यम्, ऋषेः शब्ददारिद्र्यसूचकतया न्यूनत्वापादनादिति दिक् ।

वायव्यं च मसूराणि राजमाषाणि धानदम् ॥
अन्येषां शमीधान्यानां दानात्स्वर्गमवाप्नुयात् ।
इक्षुमृद्वीकयोर्दानात्परं सौभाग्यमाप्नुयात् ॥
अन्येषां शूकधान्यानां प्रदाने नियतो नरः ।
स्वर्गलोकमवाप्नोति नात्र कार्या विचारणा ॥
पक्वान्नदानं फलदं नृलोके शुष्कान्नमुक्तं हि तथैव यस्मात् ।
यजन्ति यज्ञैर्हि ततो द्विजेन्द्रास्तस्माच्च तत्पुण्यतमं प्रदिष्टम्॥

( ङ ) स्कान्दे—

सर्वेषामेव दानानामन्नदानं परं स्मृतम् ।
सद्यः प्रीतिकरं दिव्यं बलबुद्धिविवर्द्धनम् ॥

---

का प्रिय होता है। जो सांवा देता है उस पर देवता प्रसन्न होते हैं। मूंग देने वाला इन्द्रलोक, उड़द देने वाला यमलोक और तिल देने वाला अपने इष्टलोक को पाता है। साठी के दान से निर्ऋतिलोक, चीना के सहित चना अर्थात् चीना ( धान्य विशेष ) और चना के दान से वरुणलोक, मसूर के दान से वायुलोक और बोड़े के दान से कुबेरलोक को पाता है। फली वाले ( मटर आदि ) अन्य धान्य के दान से स्वर्ग, ईख और मुनक्के के दान से परम–सौभाग्य, बाली से पैदा होने वाले अन्य धान्य के दान से स्वर्ग पाता है, इसमें कोई संशय नही है। इस लोक में पकाये हुये अन्न का दान सब फल को देने वाला है, वैसे ही सूखा ( कच्चा ) अन्न भी सर्व फल–प्रद है। क्यों कि उससे द्विजराज लोग यज्ञ करते हैं, इस लिये पक्वान्न से आमान्न विशेष पुण्यवाला कहा गया है। (ङ) स्कन्दपुराण–अन्न का दान सब दानों में श्रेष्ठ है, क्यों कि वह शीघ्र प्रसन्न करने वाला सौन्दर्य, बल और बुद्धि

नान्नदानसमं दानं त्रिषु लोकेषु विद्यते ।
अन्नाद्भवन्ति भूतानि म्रियन्ते तदभावतः ॥
गर्भस्था जायमानाश्च बाला वृद्धाश्च मध्यमाः ।
आहारमभिकाङ्क्षन्ति देवदानवतापसाः ॥
क्षुधा हि सर्वरोगाणां व्याधिः श्रेष्ठतमः स्मृतः ।
तस्यान्नौषधयोगेन प्रतीकारः प्रकीर्तितः ॥
अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्वदः ।
तस्मादन्नप्रदानेन सर्वदानफलं लभेत् ॥
धर्मार्थकाममोक्षाणां देहः परमसाधनम् ।
स्थितिस्तस्यान्नपानाभ्यामतस्तत्सर्वसाधनम् ॥
अन्नं प्रजापतिः साक्षादन्नं विष्णुः शिवः स्वयम् ।
तस्मादन्नसमं दानं न भूतं न भविष्यति ॥

को बढाने वाला है। अन्न से प्राणी उत्पन्न होते हैं और अन्न न मिलने से मर जाते हैं, इस लिये तीनों लोक में अन्न दान के समान दूसरा दान नही है। गर्भ में रहने वाला, माता के उदर से पैदा होने वाला, बालक, तरुण, देवता, दानव और तपस्वी सभी आहार की इच्छा करते हैं। सब रोगों में भूख प्रधान रोग है, उसे अन्न रूपी औषध से दूर करना चाहिये। अन्नदाता प्राणदाता कहा गया है और प्राणदाता सब कुछ देने वाला है, इस लिये अन्न के दान से सब दान का फल मिलता है। धर्म काम और मोक्ष की साधना शरीर से ही होती है, और शरीर की स्थिति अन्न जल से है, इसलिये अन्न जल सब का साधन करने वाला है। अन्न साक्षात् प्रजापति ब्रह्मा–विष्णु–शिव रूप है, इसलिये उस के दान के

( च ) भविष्ये—

अन्नदानात्परं दानं न श्रुतं न परीक्षितम् ।
यतो वदन्ति श्रुतयः अन्नं ब्रह्मेति निश्चितम् ।।

( छ ) श्रीदेवीभागवते—

अन्नदानात्परं दानं न भूतं न भविष्यति ।
नात्र पात्रविचारोऽस्ति न कालनियमस्तथा ।।

( ज ) विष्णुधर्मोत्तरे—

न च देशः परीक्ष्योऽत्र देयमन्नं सदैव तत् ।

( झ ) भविष्ये—

दारापत्यगृहादीनि वासोऽलङ्कारभूषणम् ।
असह्यं चानश्नतस्तु सह्यं भुक्तवतो ध्रुवम् ।।
तस्मादन्नसमं दानं न भूतं न भविष्यति ।
यथा(१)विभवदातव्यं तस्मादन्नं द्विजातये ।।

समान दूसरा दान न हुआ न होगा। (च) भविष्यपुराण–अन्नदान से बढकर दूसरा दान न सुना गया और न परीक्षा किया गया है, क्यों कि श्रुतियों ने अन्न को ब्रह्म ही निश्चित किया है। (छ) देवी भागवत–अन्न दान से परे दूसरा दान न हुआ है न होगा, अन्नदान में पात्र और समय का कोई नियम नही है। (ज) विष्णुधर्मोत्तर–अन्नदान में देश की परीक्षा नही है, उसे सदा देना चाहिये। (झ) भविष्यपुराण–भूखे को स्त्री, पुत्र, घर वस्त्र और आभूषणादि अच्छा नही लगता, अन्न पाने वालों को ही ये सब बातें अच्छी लगती हैं, इससे अन्नदान से बढकर दूसरा दान नही है, वित्त के

( १ ) यथाविभवदातव्यमित्यत्र सुप्सुपेति समासो बोध्यः ।

( ञ ) नन्दिपुराणे—

अपि कीटपतङ्गानां शुनां चाण्डालयोनिनाम् ।
दत्वाऽन्नं लोकमाप्नोति प्राजापत्यं समासतः ॥
बान्धवेभ्योऽतिथिभ्योऽन्नं मित्रेभ्यश्च प्रयच्छताम् ।
दीनान्धकृपणानां च स्वर्गः स्यादन्नदायिनाम् ॥

( ट ) व्यासः—

पुष्करिण्यस्तथा वाप्यो देवताऽऽयतनानि च ।
अन्नदानमथारामाः पूर्त्तमित्यभिधीयते ॥

( ठ ) ब्रह्माण्डपुराणे—

पक्वान्नानि करम्भं च मिष्टान्नघृतशर्कराः ।
कृसरा मधुपर्कं च पयः पायसमेव च ।
स्निग्धमुष्णां च यो दद्याज्ज्योतिष्टोमफलं लभेत् ॥

( ड ) भविष्ये—

ताम्बूलं यो नरो दद्यात्प्रत्यहं नियमान्वितः ।

---

अनुसार द्विजाति (ब्राह्मण–क्षत्रिय–वैश्य) को अन्न देना चाहिये । (ञ) नन्दिपुराण–दाता कीट, पतंग, कुत्ते और चांडाल जातियों को भी अन्न देकर कम से कम ब्रह्मलोक पाता है । बांधव, अतिथि, मित्र, धनहीन, अन्धे और कृपण को अन्न देने से दाता को स्वर्ग होता है । (ट) व्यास पोखरा, बावली, मन्दिर, अन्न–दान और वृक्षवाटिका ये पूर्त कहाते हैं । (ठ) ब्रह्मांडपुराण–पक्वान्न ( पूड़ी आदि ) दधि मिला सत्तू, मिठाई, घी, शक्कर, खिचड़ी, मधुपर्क ( दधि–मधु–घृत मिला हुआ ) दूध और खीर जो मृदु और गरमागरम देता है, वह ज्योतिष्टोम–याग का फल पाता है । (ड)

देवेभ्योऽथ द्विजातिभ्यो महाभाग्यं समश्नुते ॥

( ढ ) वह्निपुराणे—

अन्नं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्वा नराः स्वर्यान्ति धर्म्मिणः ॥

( ण ) विष्णुधर्म्मोत्तरे—

अन्नदाने न कर्तव्यं पात्रापेक्षणमण्वपि ।
सदोषेऽपि तु निर्दोषं सगुणेऽपि गुणावहम् ॥

( त ) पद्मपुराणे—

अन्नदः पुरुषो लोके प्राणदाता स्मृतो बुधैः ।
चैत्रवैशाखयोर्वारि इन्धनं पौषमाघयोः ।
स्वकाले पुण्यफलदमन्नं सर्वत्र सर्वदा ॥

( थ ) हेमाद्रौ, मनुः—

कपिलाकोटिदानस्य यत्पुण्यं हि विधीयते ।



भविष्यपुराण—जो प्रतिदिन नियम से देवता, द्विजाति ( ब्राह्मण—क्षत्रिय—वैश्य ) को पान देता है, वह भाग्यवान् होता है । (ढ) वह्निपुराण—हे ऋषियों ! अन्न, कन्द, मूल, फल, शाक और जलपात्र के धनानुसार दान से धार्मिक—मनुष्य स्वर्ग को जाते हैं। (ण) विष्णुधर्म्मोत्तर—अन्नदान में पात्र का विचार थोड़ा भी न करना चाहिये, क्यों कि वह दान दोष सहित भी निर्दोष और गुण—युत भी गुण देने वाला है । (त) पद्मपुराण—विद्वानों ने संसार में अन्नदाता को प्राणदाता कहा है, चैत वैशाख में जल और पूस माघ में लकड़ी का दान अपने मास ही में पुण्य—दायक है, किंतु अन्न-दान तो सदा और सर्वत्र पुण्य फल देने वाला है । (थ) मनु-करो-

तत्पुण्यफलमाप्नोति पानीयं यः प्रयच्छति ॥

( द ) नन्दिपुराणे—

योऽपि कश्चित्तृषार्त्ताय जलपानं प्रयच्छति ।
स नित्यतृप्तो भवति स्वर्गे युगशतं नरः ॥

( ध ) बृहत्पाराशरीये—

यो द्विजान्पाययेत्तोयमन्यानपि पिपासुकान् ।
प्रपाश्च भावयेद् ग्रीष्मे देवलोकमवाप्नुयात् ॥

( न ) महाभारते—

प्रपाश्च कार्या दानार्थं नित्यं तु द्विजसत्तम ।
स दुर्गविषमं कृच्छ्रं न कदाचिदवाप्नुते ॥

( प ) भविष्योत्तरे—

प्रपा दातुमशक्तेन विशेषाद्धर्ममीप्सुना ।
उद(१)कुम्भं प्रदातव्यं प्रत्यहं तु द्विजातये ॥
उदकुम्भप्रदानेऽपि ह्यशक्तो यः पुमान्भवेत् ।

ड़ों कपिला गाय के दान से जो पुण्य होता है, वह संपूर्ण फल केवल जलदान करने से ही प्राप्त हो जाता है । (द) नन्दिपुराण—जो कोई प्यासे को जल देता है, वह सैकड़ों युग तक स्वर्ग में नित्य तृप्त रहता है । (ध) बृहत्पाराशर—जो प्यासे ब्राह्मणों तथा अन्य प्यासे प्राणियों को भी जल पिलवाता है, गर्मी के दिनों में पौशाला बनवाता है, उसे देवलोक मिलता है । (न) महाभारत—हे द्विज! प्रतिदिन जलदानके लिये पौशाला बनवाना चाहिये, इस से उसे कभी कोई कठिनाई या कष्ट नही होता । (प) भविष्य

( १ ) अत्र लिङ्गमशिष्यं लोकाश्रयत्वादिति क्लीबत्वमार्षं वा बोध्यम् ।

तेनाश्वत्थतरोर्मूलं सेच्यं तत्फलकाङ्क्षिणा ॥
इत्यन्नोदकादिदानवैशिष्ट्यम् ॥

---

अथ दानानां षडधिष्ठानानि ।

( क ) हैमाद्रौ, देवलः—

धर्ममर्थं च कामं च व्रीडाहर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥

तत्र धर्मदानं च—

पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं त्यागबुद्ध्या यद्धर्मदानं तदुच्यते ॥

---

पुराण—पौशाला देने में असमर्थ पुरुष को उस धर्म की इच्छा से प्रति दिन जल से भरे हुये घड़े ब्राह्मण को देना चाहिये । जो पुरुष जलकुंभ देने में भी असमर्थ हो तो उसको घटदान के फल की इच्छा से पीपल वृक्ष सीचना चाहिये । इति अन्नोदकादि दान वैशिष्ट्य ।

## दान के छ स्थान ।

(क) देवल–धर्म, अर्थ, काम, लज्जा, हर्ष और भय ये छ दान के स्थान हैं । बिना किसी अर्थ के केवल त्यागबुद्धि से सुपात्र को जो दान दिया जाय उसे 'धर्मदान' कहते हैं । इसी तरह किसी प्रयोजन से जो दिया जाय उसे 'अर्थदान', स्त्री आदिके प्रसंगसे जो दिया जाय उसे 'कामदान', सभा में याचक से मांगने पर लजा कर जो दिया जाय उसे 'व्रीडादान', पुत्र के जन्म आदि प्रिय कार्य को सुनकर जो दिया जाय उसे 'हर्षदान' और डरकर दुःख देने

अवशिष्टानि पञ्च अर्थकामव्रीडाहर्षभयानि स्पष्टानि ।

इति दानाधिष्ठानानि ॥

---

### अथ दानस्वरूपम् ।

( क ) हेमाद्रौ, देवलः—

ध्रुवमाजस्रिकं काम्यं नैमित्तिकमिति क्रमात् ।
वैदिको दानमार्गोऽयं चतुर्धा वर्ण्यते बुधैः ॥
प्रपाऽऽरामतडागादि सर्वकामफलं ध्रुवम् ।
तदाजस्रिकमित्याहुर्दीयते यद्दिने दिने ॥
अपत्यविजयैश्वर्य्यस्त्रीबालार्थं यदिष्यते ।
इच्छासंस्थं तु तद्दानं काम्यमित्यभिधीयते ॥
कालापेक्षं क्रियापेक्षमर्थापेक्षमिति स्मृतम् ।
त्रिधा नैमित्तिकं प्रोक्तं सहोमं होमवर्जितम् ॥

---

वाले को जो दिया जाय उसे 'भयदान' कहते हैं । इति दानाधिष्ठान।

### दान का स्वरूप ।

( क ) देवल—विद्वानोंने ध्रुव, आजस्रिक, काम्य और नैमित्तिक ये चार प्रकार के वैदिक-दान कहे हैं। पौशाला, वृक्षवाटिका और तालाब आदि कार्य 'ध्रुव' कहलाता है, जो प्रतिदिन दिया जाय उसे 'आजस्रिक' कहते हैं। पुत्र, विजय, ऐश्वर्य, और स्त्री आदि के लिये जो इच्छानुसार दिया जाय उसे 'काम्य' कहते हैं। काल, क्रिया और द्रव्य की अपेक्षा जिसमें हो उसे 'नैमित्तिक' दान कहते हैं, इस नैमित्तिक-दान में होम करना न करना दोनों पक्ष है।

( ख ) मनुः—

येन येन तु भावेन यद्यद्दानं प्रयच्छति ।
तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः ॥

( ग ) कूर्मे—

यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ।
चेतसा भक्तियुक्तेन दानं तद् विमलं शिवम् ॥

( घ ) विष्णुधर्मोत्तरे—

तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः सदा ।
अतोऽन्यथा तु मानुष्ये राजसानां फलं भवेत् ॥
सात्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः ।
कृतानि विधिहीनानि वञ्चनार्थं तु तामसम् ॥
क्रोधलोभाभिभूतेन राजसं परिकीर्तितम् ।

---

(ख)मनु—जिस जिस स्वर्ग आदि की कामना से जो जो दान दिये जाते हैं, वे उसी कामना से युक्त होकर उस दान के फल के द्वारा वह दाता दूसरे जन्म में पूजित होकर पाता है। (ग) कूर्मपुराण—भक्ति—युक्त चित्त से ईश्वर की प्रसन्नता के लिये जो दान ब्राह्मणों को दिया जाता है, वह कल्याण करने वाला 'विमलदान' है। ( घ ) विष्णुधर्म्मोत्तर—तामसदान का फल पक्षी आदि के योनि में, राजसदान का फल मनुष्ययोनि में और सात्विकदान का फल देवयोनि में प्राप्त होकर भोगता है। ठगने के लिये विधि से हीन किया गया 'तामस', क्रोध और लोभ से किया गया राजस और

सात्विकानि भवन्तीह श्रद्धया परया द्विज ॥

इति दानस्वरूपम् ।

---

अथ दानानां षड् विपाकाः ।

( क ) हेमाद्रौ, देवलः—

दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।
षड् विपाकयुगुद्दिष्टं षडेतानि विपाकतः ॥

तानि व्याचष्टे—

नास्तिकस्तेनहिंस्रेभ्यो जाराय पतिताय च ।
पिशुनभ्रूणहन्तृभ्यां प्रदत्तं दुष्फलं भवेत् ॥
महदप्यफलं दानं श्रद्धया परिवर्जितम् ।
परबाधाकरं दानं परमप्यूनतां व्रजेत् ॥
यथोक्तमपि यद्दत्तं चित्तेन कलुषेण तु ।

---

परम-श्रद्धा से किया गया 'सात्विक' दान कहलाता है। इति दानस्वरूप ।

दान के छ परिणाम ।

(क) देवल— दुष्फल, निष्फल, हीन, तुल्य, विपुल और अक्षय ये छ दान के परिणाम हैं, उनको कहते हैं—नास्तिक, चोर, जीवों को मारनेवाले, जार, पतित, चुगली करने वाले और गर्भपात करनेवाले को दिया गया दान दुष्फल ( अर्थात् विपरीत फलवाला ), श्रद्धा से रहित बड़ा भी दान निष्फल (खराब फलवाला ), दूसरे को बाधा पहुचाने वाला उत्तम भी दान हीन ( कम फलवाला ), मलीन मन से दिया गया दान तुल्य ( समान फल

तत्तु सङ्कल्पदोषेण दानतुल्यफलं भवेत् ॥
युक्ताङ्गैः सकलैः षड्भिर्दानं स्याद् विपुलोदयम् ।
अनुक्रोशवशाद्दत्तं दानमक्षयतां व्रजेत् ॥
इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्तनात् ।
श्लाघानुशोचनाभ्यां च भग्नतेजो विपद्यते ॥

इति दानविपाकाः ।

---

## अथ दानानां षडङ्गानि ।

( क ) हेमाद्रौ, देवलः—

दाता प्रतिग्रहीता च श्रद्धा देयं च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड् विदुः ॥

---

वाला ), दान के छ अंगों से युक्त विपुल ( बहुत फलवाला ) और दया-युक्त-दान अक्षय होता है, अर्थात् विपुल और अक्षय दान का परिणाम अच्छा तथा तुल्य का तुल्य है, शेष तीन का अच्छा नही है। कहने से प्रशंसा और सोच करने से याग, दान और अध्ययन का फल नष्ट होता है। अर्थात् यज्ञ, पूजादि, दान, और स्वाध्याय वेद पुराण स्तोत्रादि पाठ ये सब कर्म अपने यश के लिये कहते फिरने से विनाश को प्राप्त होते हैं, तथा उक्त स्वकृत कर्म की प्रशंसा या सोच करने से वे तेजो-हत होकर नाश हो जाते हैं। इति दान परिणाम ।

## दानके छ अङ्ग ।

( क ) देवल—दाता, प्रतिग्रहीता, देय, धर्म, देश और काल ये दान के छ अङ्ग हैं।

तत्रादौ—

## दातुर्विवेचनम् ।

( ख ) शातातपः—

प्रच्छन्नानि च दानानि ज्ञानं च निरहङ्कृतम् ।
तपांसि च सुतप्तानि तेषां फलमनन्तकम् ॥

( ग ) ब्रह्मप्रोक्ते—

गुप्ताध्यायी गुप्तदाता गुप्तपूजाऽग्निसत्क्रियः ।
पूज्यते स लोकेषु सर्वदेवैः शतक्रतुः ॥

( घ ) वह्निपुराणे—

तमोवृतस्तु यो दद्याद् भयात्क्रोधात्तथैव च ।
नृप दानं तु तत्सर्वं भुङ्क्ते गर्भस्थ एव च ॥
ईर्ष्यामन्युमनाश्चैव दम्भार्थं चार्थकारणात् ।
यो ददाति द्विजातिभ्यः सबालत्वे तदश्नुते ॥
देशे काले च पात्रे च यो ददाति द्विजातिषु ।
परितुष्टेन मनसा यौवने तु तदश्नुते ॥

## दाताका विवेचन ।

(ख) शातातप—सुगुप्त (छिपे) दान, बिना घमंड के ज्ञान और सच्चे तपके फलका अन्त नही है। (ग) ब्रह्मप्रोक्त–जैसे इन्द्र सब देवताओं से पूजित है, वैसे ही जिसका अध्ययन, दान, पूजा और यज्ञ गुप्त हो वह दाता सब लोक में पूजित होता है। (घ) वह्निपुराण हे राजन ! जो दाता अज्ञान, भय और क्रोध से देता है वह गर्भ ही में उसका फल पा जाता है, गर्भ ही में समाप्त हो जाता है।

वैश्वदेवविहीनं च सन्ध्योपासनवर्जितम् ।
यद्दानं दीयते तत्तु वृद्धकाले समश्नुते ॥

( ङ ) भविष्ये—

यस्त्वासन्नमतिक्रम्य ब्राह्मणं (१)पतितादृते ।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥
तस्मान्नातिक्रमेद् प्राज्ञो ब्राह्मणान्प्रातिवेशिकान् ।
सम्बन्धिनस्तथा सर्वान्दौहित्रं विट्पतिं तथा ॥
भागिनेयं विशेषेण तथा बन्धून् खगाधिप ।
नातिक्रमेन्नरस्त्वेतान्सुमूर्खानपि गोपते ॥

अर्थात् ऐसे दानों का फल जन्म के पश्चात् तरुण आदि अवस्था में उसे भोगने को नहीं मिलता है । जो दाता अर्थ के कारण, डाह, क्रोध और कपट से ब्राह्मणों को देता है, वह वाल्यावस्था में भोगता है । अर्थात् यहीं तक उसकी समाप्ति है । जो प्रसन्न मन से देश, काल में योग्य ब्राह्मणों को देता है, वह युवावस्था में पाता है । अर्थात् ऐसे दान के फल को वह अच्छीतरह से उपभोग करने में समर्थ होता है । वैश्वदेव, सन्ध्योपासन आदि कर्म न करके जो दान देता है, वह वृद्धावस्था में पाता है । अर्थात् दान फल प्राप्त होने पर भी उपभोग करने में असमर्थ होता है । सारांश यह है कि तरुण का फल ठीक है शेष का नहीं । (ङ) भविष्यपुराण—जो दाता अपने समीप के ब्राह्मण को–जो पतित न हो–छोड़कर गुणवान् दूरस्थ ब्राह्मण को दान देता है, वह नरक में जाता है । इससे बुद्धिमान्

( १ ) पातित्यकारणानि मन्वादिस्मृतितोऽवगन्तव्यानि, इह विस्तरभिया विरम्यते ।

( च ) तथा—

यश्चैव ते मयाऽऽख्यातो व्रतदानविधिः परः ।
सफलः स तु विज्ञेयः सदाचारवतां सताम् ॥
आचाराद्विच्युतो जन्तुर्न कुलीनो न धार्मिकः ।
साधूनां च सदा वृत्तं स सदाचार उच्यते ॥
ये नास्तिकाऽनैष्ठिकाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥

( छ ) यमः—

अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति ।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥

इति दातुर्विवेचनम् ।

---

दाता को चाहिये कि निकटस्थ ब्राह्मण का अतिक्रमण न करे, वैसे ही सभी सम्बन्धी दौहित्र ( नाती ), दामाद और विशेष करके भगिना तथा बन्धुओं का अतिक्रमण न करे, हे गरुड़ ! चाहे ये मूर्ख भी हों । (च) उसी तरह–मैंने जो श्रेष्ठ व्रत दान की विधि तुम्हें बतलायी, वह सदाचारी पुरुषों के लिये सफल जाननी चाहिये । आचार से रहित पुरुष न कुलीन और न धार्मिक है, साधुओं के जो आचार हैं, उसे 'सदाचार' कहते हैं । जो नास्तिक तथा अश्रद्धालु, गुरु और शास्त्र के वचन को न मानने वाले, अधार्मिक और दुराचारी हैं, उनकी आयु नष्ट हो जाती है । (छ) यम–जो दूसरे के धन को अपहरण करके दान देता है, वह नरक में जाता है और जिसका धन है, उसे उस दान का फल मिलता है । इति दाताविवेचन ।

## अथ प्रतिग्रहीतुर्विवेचनम् ।

( क ) कालिकापुराणे—

यद्दत्तं वेदविद्विप्रे यद्दत्तं ब्रह्मचारिणि ।

तपोनिधेस्तु यद्दत्तं कारुण्येन च यत्सदा ।

यत्सर्वमक्षयं दानं वैमल्येन विधाय यत् ॥

( ख ) बृहस्पतिः—

(१)शूद्रे समगुणं दानं (२)वैश्ये तु द्विगुणं स्मृतम् ।

---

## दान लेने वाले का विवेचन ।

(क)कालिकापुराण–जो दान दया और शुद्ध–चित्त से वैदिक–ब्राह्मण ब्रह्मचारी तथा तपस्वी को दिया जाय, उस दान का नाश नही होता है। (ख) बृहस्पति–शूद्र को दिये गये दान का फल समान, वैश्य को दूना, क्षत्रिय को तिगुना और ब्राह्मण को दिये गये दान का फल छ गुना है।

[ शूद्र का कर्म मनु जी बतलाते हैं कि–शूद्र की ब्राह्मणसेवा ही प्रधान कर्म है। ब्राह्मण की सेवा करने से आजीविका न चले तो वृत्ति की इच्छा करता हुआ शूद्र, क्षत्रिय वा धनी

---

( १ ) अस्य कर्माह मनुः—विप्रसेवैव शूद्रस्य प्रधानं कर्म कीर्त्यते । तथा—शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि । धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत ॥ अस्यापदि याज्ञवल्क्यः—शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग् भवेत् । शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन् ॥

( २ ) अस्य कर्माण्याह याज्ञवल्क्यः—इज्याऽध्ययनदानानि वैश्यस्य क्षत्रियस्य च । तथा—कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम् । अस्यापदि मनुः—वैश्योऽजीवन्स्वधर्मेण शूद्रवृत्त्याऽपि वर्तयेत् । अनाचरन्न कार्याणि निवर्तेत च शक्तिमान् ।

(३)क्षत्रिये त्रिगुणं प्राहुः षड्गुणं (४)ब्राह्मणे स्मृतम् ॥

वैश्य की सेवा करके जीविका चलावे। इसका आपद्धर्म याज्ञवल्क्य बतलाते हैं कि–ब्राह्मणादि द्विजों की सेवा से जीविका न चले तो वैश्य के व्यापारादि कर्म को करे, अथवा द्विजातियों के हित करने की चिन्ता करता हुआ अनेक प्रकार की शिल्प–विद्या कारीगरी से निर्वाह करे। वैश्य का कर्म याज्ञवल्क्य बतलाते हैं कि–यज्ञ करना, वेद वेदाङ्ग पढ़ना और दान देना ये तीनों काम क्षत्रिय वैश्य के हैं। वैसे ही–व्याज लेना, खेती करना, व्यापार करना और गाय आदि पशुओं को पालना, ये वैश्य के कर्म हैं। इसका आपद्धर्म मनु कहते हैं कि–वैश्य व्यापारादि स्वधर्म से आजीविका न कर सके तो शूद्र की वृत्ति से जीविका चलावे, किन्तु उच्छिष्ट–भोजन आदि अकार्य उस समय न करे, आपत्ति

( ३ ) अस्य कर्माह याज्ञवल्क्यः—प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्। मनुः—प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च। विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥ मार्कण्डेयपुराणे—धर्मः प्रोक्तः क्षिते रक्षा शस्त्राजीवोऽस्य जीविका। अस्यापदि मनुः—जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः। नत्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हि चित॥ प्रसङ्गात्—एतेनेत्यस्य वैश्यवर्तनरसविक्रयणादिनेत्यर्थो बोध्यः। आपदि जीवकाऽर्थं क्षत्रियवैश्ययोरध्यापनं तु ब्राह्मणप्रेरितयोर्भवति न स्वेच्छया, "आपत्काले ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषा, समाप्ते ब्राह्मणो गुरुः" इति गौतमस्मरणात्।

( ४ ) अस्य कर्माण्याह मनुः—अध्यापनमध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः॥ षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥ अस्यापदि याज्ञवल्क्यः—क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः। निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि॥ इति दिक्।

**श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः ।**
**आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणि ॥**

दूर होने पर शूद्र कर्म को छोड़ दे । क्षत्रिय का कर्म याज्ञवल्क्य बतलाते हैं कि–चोर आदि से प्रजा की रक्षा करना क्षत्रिय का मुख्य कर्म है । मनु भगवान कहते हैं कि–प्रजाओं की रक्षा करना, दान देना, यज्ञ करना, वेद वेदाङ्ग पढ़ना और संसार के विषय ( गीत, नृत्य और वनितोपभोग ) में आसक्ति न रखना ये कर्म क्षत्रिय के संक्षेप से हैं । मार्कण्डेयपुराण में कहा है कि–पृथ्वी की रक्षा के लिये बाण खड्ग का धारण करना क्षत्रिय की जीविका है । इसके आपत्काल में मनु जी कहते हैं कि–आपत्तिमें पड़ा हुआ क्षत्रिय जीविका के लिये ( ब्राह्मण के विषय में निषिद्ध भी ) रस आदि को बेचकर वैश्य के समान आजीविका चलावे, किन्तु कभी भी ब्राह्मण की जीविका का आश्रय न ले । आपत्तिकाल में क्षत्रिय और वैश्य ब्राह्मण की प्रेरणा से अध्यापन कर सकता है अपनी इच्छा से नही, क्यों कि गौतम का कथन है कि–'आपत्ति काल में अब्राह्मण ( क्षत्रिय और वैश्य ) से ब्राह्मण को विद्या पढ़नी चाहिये–तथा अनुगमन आदि शुश्रूषा करनी चाहिये, विद्या पढ़ लेने पर उस क्षत्रियादि अध्यापक का वह गुरु हो जाता है ।' ब्राह्मण के कर्म मनु बतलाते हैं कि–वेद वेदाङ्ग पढ़ना, यज्ञ करना, कराना, दान देना तथा लेना, ये छ कर्म ब्राह्मण के हैं । इनमें से यज्ञ कराना, वेद वेदाङ्ग पढ़ाना और द्विजातियों से दान लेना, ये तीन कर्म आजीविका के लिये हैं । आपत्ति में याज्ञवल्क्य कहते हैं कि—ब्राह्मण आपत्तिकाल में अपने कर्म से निर्वाह न कर सके तो क्षत्रिय के या वैश्य के कर्म से जीविका चलावे, उस आपत्ति से पार होकर प्रायश्चित करके अपने को स्वधर्म पर स्थित करे । ]

( ग ) विष्णुधर्मोत्तरे—

अमानुषे समं दानं गोषु ज्ञेयं फलं तथा ।
द्विगुणं तु तदेवोक्तं तथा त्रैवर्णसङ्करे ॥
पुरोहिते तु स्वे दत्तं दानमक्षय्यमुच्यते ।
उपाध्यायर्त्विजोश्चैव गुरावपि च मानवैः ॥
वर्णापेक्षा न कर्तव्या मातरं पितरं प्रति ।
दुःखान्वितानां दीनानामक्षयं परिकीर्तितम् ॥
आपन्नेषु तु यद्दत्तमक्षयं तदुदाहृतम् ।
विद्याऽध्ययनसक्तानामन्नदानं महाफ(५)लम् ॥

---

श्रोत्रिय को दिये गये दान का फल हजार गुणा, आचार्य को दो हजार गुणा, आत्मज्ञानी को सौ हजार गुणा और अग्निहोत्री (स्मार्ताग्नि या श्रौताग्निमान्) को दिये गये दान का अनन्त फल है। (ग) विष्णुधर्मोत्तर–पशु पक्षी आदि जीवों को दिये गये दान का समान, गाय और अनुलोम त्रिवर्णज–जाति को दिये गये दान का दुगुना फल है। अपने पुरोहित, उपाध्याय, ऋत्विज, गुरु, माता, पिता, दुःखी, दरिद्र और आपत्ति को प्राप्त हुये पुरुषों को दिये गये दान का फल अक्षय है, माता पिता में वर्ण का विचार नहीं करना चाहिये। विद्याध्ययन करने वालों को अन्नदान का महाफल है। [ गरुड़पुराण में लिखा है कि–जो छात्र जिसका अन्न विद्याभ्यास करने से पचाता है, उस दाता के दश पहले और

---

( ५ ) कुक्षौ तिष्ठति यस्यान्नं विद्याऽभ्यासेन जीर्यति ।
तारयेत्तस्य गोत्राणि दश पूर्वान्दशापरान् ॥

( घ ) यमः—

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥

( ङ ) पाद्मे—

दीनान्धकृपणानाथ वाग्विहीनेषु यत्तथा ।
विकलेषु तथाऽन्येषु जडवामनपङ्गुषु ।
रोगार्त्तेषु च यद्दत्तं तत्स्याद्बहुफलं धनम् ॥

( च ) महाभारते—

यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्युतः ।
तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम् ॥
पङ्ग्वन्धबधिरा मूका व्याधिनोपहताश्च ये ।
भर्तव्यास्ते महाराज न तु देयः प्रतिग्रहः ॥

---

दश बाद के पुरुषों को वह तार देता है । ] (घ) यम—अब्राह्मण को दिये गये दान का फल समान, ब्राह्मणब्रुव को द्विगुण, पढ़ने वाले को सौ हजार और वेद—पारग को दिये गये दान का अनन्तफल है । (ङ) पद्मपुराण—दीन, दरिद्र, अन्धे, गूँगे, विकल ( जिसके स्वभावतः अधिक या कम अङ्ग हों ), मूढ, बौने, लँगड़े, लूले और रोगी को दिये गये दान का बहुत फल है । (च) महाभारत—यदि सदाचारी ब्राह्मण दूर देश में भी हो और निकट में अज्ञ हो तो अज्ञ को छोड़ कर सदाचारी ही को दान देना योग्य है । हे महाराज ! जो लूला, अन्धा, बधिर, गूंगा और रोगी हो, उसका भरण करना चाहिये दान नहीं देना चाहिये । अर्थात् षोडश महादानादि के अधिकारी पंगु अन्ध बधिरादि नहीं हो सकते,

( छ ) संवर्त्तः—

श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः ।
यद्दानं दीयते तस्मै तद्दानं शुभकारकम् ॥

( ज ) भविष्ये सूर्योक्तिः—

दीनान्धकृपणानां च बालवृद्धातुरेषु च ।
यद्दीयते खगश्रेष्ठ तस्यानन्तफलं भवेत् ॥

( झ ) दत्तः—

धूर्त्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे ।
चाटचारणचौरेभ्यो दत्तं भवति निष्फलम् ॥

( ञ ) भविष्ये—

नाब्राह्मणाय दातव्यं न देयं ब्राह्मणाक्रिये ।
न ब्राह्मणब्रुवे चैव न च दुर्ब्राह्मणे धनम् ॥
उपासते ये न पूर्वां द्विजाः सन्ध्यां न पश्चिमाम् ।
सर्वांस्तान्धार्मिको राजा शूद्रकर्मणि योजयेत् ॥

---

उनको केवल भरण पोषणात्मक दान देना उचित है। (छ) संवर्त–विशेष करके श्रोत्रिय, दरिद्र और दानेच्छुकों को दिया हुआ दान कल्याण करने वाला है। (ज) भविष्यपुराण–हे गरुड़ ! दरिद्र, अन्धे, कृपण, बालक, वृद्ध और रोगी को दिये गये दान का अनन्तफल है। (झ) दत्त–ठग, भाट, पहलवान, कुवैद्य, जुआरी, कुटिल, आर्यमर्यादा या शास्त्रमर्यादा को तोड़ने वाले चाट, कथिक और चोर को दिया गया दान निष्फल है। (ञ) भविष्यपुराण–अब्राह्मण, ब्राह्मणाक्रिय, ब्राह्मणब्रुव और दुर्ब्राह्मण को धन नहीं देना चाहिये। जो ब्राह्मण प्रातः और सायं

( ट ) व्यासः—

अनध्यायाश्च ये विप्रा ये विप्राऽनाहिताग्नयः ।
तेषां च धार्मिको राजा बलिं वृत्तिं च कारयेत् ॥

( ठ ) विष्णुः—

न वार्यपि प्रयच्छेत (१)वैडालव्रतिके द्विजे ।
न (२)वकव्रतिके पापे नावेदविदि धर्मवित् ॥

सन्ध्या को नही करता, उन सब को धार्मिक राजा शूद्र-कर्म में नियुक्त करे । (ट) व्यास–जो ब्राह्मण वेद वेदाङ्ग का अध्ययन और अग्न्याधान नही करता, उससे धार्मिक राजा कर लेवे और नौकरी करावे । (ठ) विष्णु—धर्म को जानने वाला गृहस्थ, वैडालव्रतिक, वकव्रतिक और वेद न जानने वाले ब्राह्मण को पीने को जल भी न देवे । [ जो संसार को दिखाने मात्र के लिये धर्माचरण करता है, जो सदा लोभी और ऊपर से महात्मा के ढङ्ग बनाये रहता है, जो लोगों को धोखा देता है, जो हिंसक और दूसरे के गुणों को न सहकर सब की निन्दा करता है, उसे 'वैडालव्रतिक' कहते हैं । अर्थात् जैसे विलाड़ चूहों को धोखा देने के लिये विनीत भाव से ध्यान लगाकर बैठता है, वैसे ही जिसकी झूठी धर्मध्वजा नित्य फहराती है और जो छिपकर पाप करता है तथा धोखा देता है, वह 'वैडालव्रतिक' है । जो ब्राह्मण अपनी नम्रता दिखाने के लिये शान्तभाव से सदा नीची दृष्टि रखता है, किन्तु मन में स्वार्थसाधन, निठुरता और शठता रखता हो, तथा झूठी

( १ ) मनुः—धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः । वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥

( २ ) अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः ॥

( ड ) मात्स्ये—

नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात्परः शत्रुर्नास्ति विप्रात्परो विधिः ॥

( ढ ) विष्णुधर्मोत्तरे—

विप्राः परा गतिर्मह्यं यस्तान्पूजयते नृप ।
तमहं स्वेन रूपेण प्रपश्यामि युधिष्ठिर ॥
काणाः कुण्ठाश्च षण्डाश्च दरिद्रा व्याधिताश्च ये ।
एवंरूपाश्च ये विप्राः पश्य रूपं ममैव तु ॥

( ण ) वह्निपुराणे—

न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न च ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥

( त ) भविष्ये—

आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीरं शकुन्ता इव जातपक्षाः॥

---

नम्रता दिखाता हो, उसे 'वकव्रतिक' ( बगलाभक्त ) कहते हैं । ]
( ड ) मत्स्यपुराण—ब्राह्मण के समान देवता, गुरु, शत्रु और दूसरी विधि नहीं है । ( ढ ) विष्णुधर्म्मोत्तर—हे युधिष्ठिर ! ब्राह्मण हमारे परमगति हैं, जो उनको पूजते हैं उससे मैं अपनी ही पूजा समझता हूं । जो ब्राह्मण, काना, आलसी, नपुंसक, दरिद्र और रोगी है, वे भी सब हमारे ही रूप हैं । ( ण ) वह्निपुराण—हे राजन् ! ब्राह्मणत्व का जाति, कुल, वेदाध्ययन और शास्त्र कारण नहीं है, किन्तु सदाचारी होना ही कारण है । ( त ) भविष्यपुराण—आचारहीन पुरुष को वेद पवित्र नहीं करते, चाहे

( थ ) ब्राह्मणलक्षणम्, वह्निपुराणे—

सत्यं दमस्तपोदानमहिंसेन्द्रियनिग्रहः ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥

( द ) बौधायनः—

विद्यातपश्च योनिश्च एतद् ब्राह्मणलक्षणम् ।
विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः ॥

( ध ) पात्रलक्षणमाह, याज्ञवल्क्यः—

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

( न ) ब्राह्मणब्रुवलक्षणम्, वाराहपुराणे—

अव्रतौ वैश्यराजन्यौ शूद्रश्चाब्राह्मणास्त्रयः ।
वेदव्रतविहीनश्च ब्राह्मणो ब्राह्मणब्रुवः ॥

---

वह छ अंगों के सहित क्यों न पढे गये हों। वेद उस ( अनाचारी पुरुष ) को मृत्यु समय में इस प्रकार छोड़ देते हैं, जैसे पंख उत्पन्न हो जाने पर पक्षी अपने घोसले को छोड़ देते हैं। ( थ ) ब्राह्मण का लक्षण, वह्निपुराण–हे राजेन्द्र ! जिसमें सत्य, दम, तप,दान, अहिंसा और जितेन्द्रियता हो, उसे ब्राह्मण कहते हैं। ( द ) बौधायन–विद्या, तप और जाति ये तीनों ब्राह्मण के लक्षण हैं। अर्थात इन्हीं तीनों से ब्राह्मणत्व की प्राप्ति होती है, अतः विद्या और तप से जो हीन है वह जाति मात्र का ही ब्राह्मण है। ( ध ) पात्र का लक्षण, याज्ञवल्क्य–केवल विद्या या तप से योग्यता नही होती, किन्तु जिसमें विद्या, तप और सदाचार हो वह योग्य कहा जाता है। ( न ) ब्राह्मणब्रुव का लक्षण, वाराहपुराण–अनुपनीत वैश्य और क्षत्रिय तथा शूद्र ये तीनों अब्राह्मण

( प ) अब्राह्मणब्राह्मणाक्रिययोर्लक्षणमाह, व्यासः—

ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः ।
जातिमात्रोपजीवी च भवेदब्राह्मणः स तु ॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्मविन्न चाधीतः स भवेद् ब्राह्मणाक्रियः ॥

( फ ) दुर्ब्राह्मणश्रोत्रिययोर्लक्षणमाह, यमः—

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव (१)वृषलीपतिः ॥

हैं, जिस ब्राह्मण का संस्कार तो हुआ है किन्तु वेदव्रत से विमुख है, अर्थात् वेद पढे हुये भी आचरण हीन है, वह ब्राह्मणब्रुव है। ( प ) अब्राह्मण और ब्राह्मणाक्रिय का लक्षण, व्यास–जो ब्राह्मण के वीर्य से उत्पन्न और मंत्र तथा संस्कार से रहित हो, केवल जातिमात्र से जीविका चलाता हो, वह 'अब्राह्मण' है। गर्भाधान उपनयनादि संस्कार से युक्त हो, पर न कर्म जाने और न पढा हो वह 'ब्राह्मणाक्रिय' है। ( फ ) दुर्ब्राह्मण और श्रोत्रिय का लक्षण, यम–जिसके तीन पीढी से वेदाध्ययन और उपनयनादि संस्कार छूट गये हैं या जो वृषलीपति है, वह 'दुर्ब्राह्मण' है। [ प्रभास-खण्ड में लिखा है कि–शूद्रा को वृषली कहते हैं, उस शूद्रा का पति वृषलीपति है, लार रूप जूठ के संयोग होने से वृषलीपति

( १ ) प्रभासखण्डे—वृषलीत्युच्यते शूद्रा तस्या यश्च पतिर्भवेत् । लालोच्छिष्टस्य संयोगात्पतितो वृषलीपतिः ॥ स्ववृषं तु परित्यज्य परेण तु वृषायते । वृषली सा तु विज्ञेया न शूद्रा वृषलीयते ॥ चाण्डाली बन्धकी वेश्या रजस्था या च कन्यका । ऊढा या च स्वगोत्रा स्याद् वृषल्यः संप्रकीर्तिताः ॥

ओङ्कारपूर्विकास्तिस्रः सावित्रीर्यश्च बिन्दति।
चरितब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते ॥

( ख ) आचार्यादीनां लक्षणम्, महाभारते—

अध्यापयेत्तु यः शिष्यं कृतोपनयनं द्विजः।
सरहस्यं च सकलं वेदं भरतसत्तम ॥
तमाचार्यं महाबाहो प्रवदन्ति मनीषिणः।
एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः ॥
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते।
निषेकादीनि कर्म्माणि यः करोति नृपोत्तम ॥
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते।
अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ॥

---

पतित है। जो स्त्री अपने पति को छोड़कर अन्य पुरुष से संयोग करती है—उसे वृषली जानना चाहिये, वस्तुतः शूद्रा वृषली नहीं है। चांडाली, पुंश्चली, वेश्या, रजोवती कन्या और अपने गोत्र में ब्याही गयी, ये पांच वृषली कही गयी हैं।] जो ओंकार पूर्वक तीनों व्याहृति और गायत्री जानता है, एवं जिसने ब्रह्मचर्य पालन किया है, वह 'श्रोत्रिय' है। ( ब ) आचार्यादि का लक्षण, महाभारत—हे भरतसत्तम ! जो ब्राह्मण उपनयन संस्कार युक्त शिष्य को उपनिषदादि के सहित वेद को पढाता है, उसे विद्वान् लोग 'आचार्य' कहते हैं। जो वेद के एक किसी अङ्ग अर्थात् स्वल्पभाग को और छ वेदाङ्गों को स्वजीविकार्थ पढाता है, उसे 'उपाध्याय' कहते हैं। हे राजन्! जो शिष्य का गर्भाधानादि संस्कार कराता है और उसका अन्न से पोषण भी करता है, वह ब्राह्मण 'गुरु' कहलाता है। आहवनीयादि अग्नि को अरणि में

यः करोति वृतो नूनं स तु स्यादृत्विजो द्विजः ।
वेदवेदान्तशास्त्राणां पारगः समदर्शनः ॥
दम्भभोगादिरहितः स ज्ञेयो वेदपारगः ।

( भ ) आत्मविल्लक्षणमाह, यमः—
उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिम् ।
वेत्ति विद्यामविद्यां च स भवेदात्मविन्नरः ॥

तथा—
अनमित्रो न चामित्रो मैत्रश्चात्मविदेव च ।
श्रौतस्मार्ताग्निमानग्निहोत्री ।

इति प्रतिग्रहीतुर्विवेचनम् ।

---

से निकालने का अग्न्याधेय कर्म, अष्टका, दर्श पौर्णमासादि पाक-यज्ञ और अग्निष्टोमादि यज्ञ में वृत होकर जो ब्राह्मण कर्म करता है, उसे 'ऋत्विज' कहते हैं। जो वेद वेदान्तादि शास्त्रों के पार को पहुंचा हुआ हो, समदर्शी और निष्कपट हो, तथा भोगासक्त न हो वह 'वेदपारग' है। ( भ ) आत्मविद् का लक्षण, यम—जो उत्पत्ति ( संसार प्रादुर्भाव ), प्रलय ( संसार विनाश ), तथा प्राणियों की अगति ( उच्चस्थान प्राप्ति ), गति ( अधःस्थान प्राप्ति ), विद्या ( ब्रह्मज्ञानादि ), अविद्या ( माया ) को जानता है, वह 'आत्मवेत्ता' है। वैसे ही—जिसके शत्रु न हो और स्वयं किसीके शत्रु न हो, किन्तु सब से मित्रता रखता हो वह 'आत्मविद्' है। इति प्रतिग्रहीता विवेचन।

## अथ श्रद्धाविवेचनम् ।

( क ) स्मृतिः—

प्रत्ययो धर्मकार्येषु दृढश्रद्धेत्युदाहृता ।
नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम् ॥

( ख ) तत्वबोधे श्रीशङ्कराचार्यः—

गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा ।

( ग ) स्कान्दे—

दानं दद्यात्प्रयत्नेन श्रद्धापूतमतन्द्रितः ।
श्रद्धाकृतं स्वल्पमपि दानमानन्त्यमश्नुते ॥
अश्रद्धयाऽपि यद्दत्तं सर्वस्वमपि सत्तम ।
न तत्फलाय भवति तस्माच्छ्रद्धां समाश्रयेत् ॥

( घ ) महाभारते—

श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ।
निष्किञ्चनास्तु मुनयः श्रद्धावन्तो दिवं गताः ॥

---

## श्रद्धा का विवेचन ।

(क)स्मृति-धर्मकार्य में विश्वास को श्रद्धा कहते हैं; श्रद्धा हीन को धर्मकार्य से प्रयोजन नहीं है। ( ख ) तत्वबोध में श्रीशङ्कराचार्य का कथन है कि-गुरु और वेदान्त वाक्य में विश्वास को श्रद्धा कहते हैं। ( ग ) स्कन्दपुराण-सावधानता पूर्वक श्रद्धायुक्त यत्न से दान देना चाहिये, क्यों कि श्रद्धा से किया हुआ थोड़ा भी दान अनन्तफल को प्राप्त होता है। अश्रद्धा से सर्वस्व देने पर भी उससे फल नहीं होता, इसलिये श्रद्धायुक्त होना चाहिये। ( घ ) महाभारत-धर्म श्रद्धा से साधा जाता है बहुत द्रव्य से नहीं

धर्मार्थकाममोक्षाणां श्रद्धा परमकारणम् ।
पुंसामश्रद्दधानानां न धर्मो नापि तत्फलम् ॥

इति श्रद्धाविवेचनम् ।

## अथ देयवस्तुविवेचनम् ।

( क ) देवीपुराणे—

न्यायतो यानि प्राप्तानि शाकान्यपि नृपोत्तम ।
तानि देयानि देव्यास्तु कन्यकायोषितां सदा ।
तद्भक्तेषु च विप्रेषु अपरेषु च नित्यशः ॥

( ख ) नारदः—

श्रुतशौर्य्यतपःकन्यायाज्यशिष्यान्वयागतम् ।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः ॥
कुशीदकृषिवाणिज्यशिल्पशुल्कानुवृत्तितः ।
कृतोपकारादाप्तं च शवलं समुदाहृतम् ॥

---

साधा जाता, क्यों कि मुनिलोग निर्धन होते हुए भी श्रद्धावान् होने से स्वर्ग को प्राप्त हुये श्रद्धा-धर्म, अर्थ, काम और मोक्ष का कारण है, बिना श्रद्धा के पुरुष को न धर्म और न उसका फल है। इति श्रद्धा विवेचन।

### देयवस्तु का विवेचन ।

(क) देवीपुराण-हे राजन्! न्याय से प्राप्त शाक को भी देवी, कन्या, स्त्री, देवी के भक्त ब्राह्मण और अन्य ब्राह्मणों को सदा देना चाहिये। (ख) नारद-वेद वेदाङ्गादि विद्या से, वीरता से, तपसे, कन्याके दानकाल में श्वशुरादि से, यज्ञ में यजमान से, शिष्य

पार्श्वकद्यूतचौर्यार्त्तिप्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यत्तत्सर्वेषां कृष्णमुच्यते ॥
तत्पुनर्द्वादशविधं प्रतिवर्णाश्रयात्स्मृतम् ।
साधारणं स्यात् त्रिविधं शेषं नवविधं स्मृतम् ॥
क्रमागतं प्रीतिदायः प्राप्तं च सहभार्यया ।
अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् ॥
वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम् ।
प्रतिग्रहेण संलब्धं याज्यतः शिष्यतस्तथा ॥
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ।
युद्धोपलब्धं काराच्च दण्डाच्च व्यवहारतः ॥

---

द्वारा अध्यापनादि से और कुलागत सम्पत्ति से प्राप्त, ये सात प्रकार का धन शुक्ल ( स्वच्छ ) है, तथा इसका फल भी शुद्ध है। व्याजसे, खेती से, व्यापारसे, कला कौशलादि कारीगरी से, खान से कर ( टैक्स फीस ) से, ब्राह्मण आदि की नौकरी से और किये हुये उपकार के बदले में पारितोषिकादिसे प्राप्त, ये सात प्रकार का धन शवल ( मिश्रित सामान्य ) कहलाता है। घूससे, जूएसे, चोरीसे, परपीडासे, बनावटी सुवर्ण रत्नादिकी नकल करने से, साहस ( अर्थात् अपने जान को भी संशयग्रस्त रूप कार्य ) से और कपट पाखण्डादि से पैदा किया हुआ सात प्रकार का धन सबके लिये असुखोदय कृष्ण ( निकृष्ट ) कहलाता है। फिर वह धन ब्राह्मण, क्षत्रिय, वैश्य और शूद्र के आश्रय से बारह प्रकार का है, इसमें तीनप्रकार का साधारण और शेष नव प्रकार का विशेष है , पिता पितामहादि क्रमसे प्राप्त गृहसम्पत्ति, प्रेमयुक्त

वैशेषिकधनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम् ।
कृषिगोरक्षवाणिज्यैः शूद्रस्यैभ्यस्त्वनुग्रहात् ॥
सर्वेषामेव वर्णानामेवं धर्मो धनागमः ।
विपर्ययादधर्मः स्यान्नचेदापद् गरीयसी ॥

( ग ) पाद्मे—

शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत् ।
शवलं मध्यमफलं कृष्णं हीनधनं फलम् ॥

( घ ) कात्यायनः—

सर्वस्वं गृहवर्ज्यं तु कुटुम्बभरणाधिकम् ।
यच्च द्रव्यं स्वकं देयमदेयं स्यादतोऽन्यथा ॥

---

बिना विरोध के प्राप्तभाग और ससुराल में स्त्री के साथ प्राप्त, ये तीनप्रकार का धन तीनों वर्णों के लिये साधारण हैं। दान से, यज्ञादिमें यजमानसे और शिष्यद्वारा अध्यापनादिसे प्राप्त, ब्राह्मण का विशेष धन है। युद्ध, कर और दंड–विधान से प्राप्त क्षत्रिय का भी तीन प्रकार का विशेष धन है। कृषि, पशुपालन और व्यापार से प्राप्त वैश्य का भी तीनप्रकार का विशेष धन है। ब्राह्मण, क्षत्रिय और वैश्य की सेवा से प्राप्त, बारह के अतिरिक्त शूद्र का विशेष धन है। इसतरह सब वर्णों का धर्मयुक्त धन की प्राप्ति है, इसके विपरीत धनागम अधर्मयुक्त है, यदि कोई भारी आपत्ति न प्राप्त हो तो। (ग) पद्मपुराण–पूर्वोक्त शुक्लनामक धनसे किये गये पुण्य का बहुत फल है, शवलसे सामान्य और कृष्णसे अल्प फल है। (घ) कात्यायन–घरके अतिरिक्त अपना सर्वस्व–धन जो पुत्र कलत्रादि कुटुम्बके भरण पोषणसे अधिक हो, उसका दान देना चाहिये,

( ङ ) विष्णुधर्मोत्तरे—

यस्योपयोगि यद् द्रव्यं देयं तस्यैव तद्भवेत् ।
येन येन च भाण्डेन यस्य वृत्तिरुदाहृता ॥
तत्तत्तस्यैव दातव्यं पुण्यकामेन धीमता ॥

( च ) विष्णुः—

न दानं यशसे दद्यान्नभयान्नोपकारिणि ।
न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चयः ॥

( छ )भविष्योत्तरे—

संयावं कृसरं मांसं शष्कुलीं पायसं तथा ।
आत्माऽर्थे न प्रकर्तव्यं देवतानां प्रकल्पयेत् ॥

( ज ) पाद्मे—

माहिषं लक्षमात्रं तु गव्यं कोटिगुणं भवेत् ।
कापिलं तु घृतं दत्तमनन्तं द्वादशादिने ॥

इति देयवस्तुविवेचनम् ।

---

इससे अन्यथा न देना चाहिये । ( ङ ) विष्णुधर्म्मोत्तर-पुण्य कामना वाला बुद्धिमान् पुरुष जिसके उपयोगी जो वस्तु हो तथा जिस जिस दानसे जिसकी जिसकी उपजीविका हो वह वह उसे उस व्यक्ति को देवे । ( च ) विष्णु-यशके लिये, भयसे, उपकार करने वाले और नाचने गाने वाले को दिया हुआ दान धर्मार्थ नही कहलाता । ( छ ) भविष्योत्तर-हलुआ, खिचड़ी, मांस, पूड़ी, ( साहारी ) और खीर, ये पदार्थ अपने लिये न बनाना चाहिये, देवताओं के उद्देश्य से बनाना चाहिये । ( ज ) पद्मपुराण-

## अथ देशविवेचनम् ।

( क ) देवीपुराणे—

सर्वे शिवाश्रमाः पुण्याः सर्वा नद्यः शुभप्रदाः ।
दानस्नानोपवासादिफलदाः सततं नृणाम् ॥

( ख ) व्यासः—

सर्वतीर्थमयी गङ्गा तत्र दत्तं महाफलम् ।

( ग ) पाद्मे—

गङ्गा चोदङ्मुखी यत्र यत्र प्राची सरस्वती ।
तत्र क्रतुशतं पुण्यं स्नानदानेषु सुव्रत ॥

( घ ) दानसङ्ग्रहे—

पुण्यदेशेषु सर्वेषु गृहे देवालयादिषु ।

---

द्वादशी तिथि में भैंसके घृतके दानका फल लाख गुणा, गोघृतके करोड़ गुणा और कपिला गौके घृतके दानका फल अनन्त है। इति देयवस्तु विवेचन ।

### देश का विवेचन ।

(क) देवीपुराण—मनुष्यों के लिये सर्वदा स्नान दान और निवासादि के हेतु सभी शिवाश्रम ( तीर्थ ), सभी गङ्गादि पवित्र नदियां शुभकारक हैं। (ख) व्यास—सर्वतीर्थमयी गङ्गा के तट पर किये दान का बड़ा फल है । (ग) पद्मपुराण—हे सुव्रत ! जहां उत्तर की ओर बहने वाली गङ्गा और पूर्व की ओर बहने वाली सरस्वती नदी हैं, वहां स्नान दान करने से सैकड़ों यज्ञ किये के समान पुण्य होता है । (घ) दानसंग्रह—सभी पवित्र देश, देवमन्दिर, तथा घर और जहां सभी साधन सामग्रियां एकत्रित हों, वहां दान का

यत्र साधनसम्पत्तिस्तत्र दानं महाफलम् ।
सर्वोत्तमं गृहे दानं विधिना यत्प्रदीयते ॥

इति देशविवेचनम् ।

---

## अथ कालविवेचनम् ।

( क ) मनुः—

न हि कालं प्रतीक्षेत जलं दातुं तृषाऽन्विते ।
अन्नोदकं सदा देयमित्याह भगवान्मनुः ।
न कालनियमो दृष्टो दीयमाने प्रतिश्रये ॥

( ख ) भविष्ये—

यां तिथिं समनुप्राप्य समुदेति दिवाकरः ।
स्नानाध्ययनदानेषु सा तिथिः सकला मता ॥
यया‌ऽस्तं सविता याति कृष्णपक्षे तु सा तिथिः ।

---

बड़ा फल है । विधि-विधान-युक्त अपने घर में ही जो दान दिया जाता है, वह सर्वोत्तम है । इति देश विवेचन ।

### काल का विवेचन ।

( क ) मनु—जैसे प्यासे को जल देने के लिये समय की प्रतीक्षा नहीं की जाती और न आपत्ति-ग्रस्त को सहायता देने में कोई काल का नियम निर्दिष्ट किया जाता है, वैसे ही अन्न जल सदा देना चाहिये, यह भगवान मनु का कथन है । ( ख ) भविष्यपुराण—जिस तिथि में सूर्य उदय हों वह स्नान, अध्ययन और दान में सम्पूर्ण मानी जाती है । कृष्ण पक्ष की जिस तिथि में सूर्य अस्त

पितॄणां सकला ज्ञेया स्नानदानादिकर्मसु ॥

(ग) वाराहपुराणे—

दर्शे शतगुणं दानं तच्छतघ्नं(१)दिनक्षये ।

शतघ्नं तस्य सङ्क्रान्तौ शतघ्नं (२)विषुवे ततः ॥

(३)युगादौ तच्छतगुणमयने तच्छताहतम् ।

---

हों, वह पितरों के स्नान दान आदि कर्म में सम्पूर्ण मानो जाती है। (ग) वाराहपुराण—अमावास्या में दान का फल सौ गुणा, उससे सौगुणा दिनक्षय [ जिस दिन दो तिथियों का अन्त हो अर्थात् तिथिक्षय ] में, उससे सौगुणा मेष आदि संक्रान्तियों में उससे सौगुणा विषुव [समान दिनरात्रि वाली तुला मेष की संक्रान्तियों ] में, उससे सौगुणा युगादि में [ कार्तिक शुक्लपक्ष की नवमी में सत्ययुग, वैशाख शुक्लपक्ष की तृतीया में त्रेता, माघ की अमावास्या में द्वापर और भाद्रमास के कृष्णपक्ष की त्रयोदशी में कलियुग का आरम्भ हुआ, ये युगादि कहलाते हैं इनमें दान का फल अक्षय है। ] उससे सौगुणा दक्षिणायन और उत्तरायण सूर्य में,उससे सौगुणा चन्द्रग्रहण और सूर्यग्रहणमें और उससे सौगुणा व्यतीपात में दान का फल अधिक, वेदज्ञ विद्वान् बतलाते हैं।

---

( १ ) पाद्मे-द्वौ तिथ्यन्तावेकवारे यस्मिन्स स्याद्दिनक्षयः ।

( २ ) समरात्रिन्दिवे तुलामेषावच्छिन्ने काले, समरात्रिन्दिवे काले विषुवद्विषुवं च तदित्यमरः । विषुवस्य तुलामेषाख्यस्य सङ्क्रान्तित्वे सिद्धेऽपि पृथगुपादानं दानफलातिशयप्रतिपादनार्थम् ।

( ३ ) स्कान्दे—नवम्यां शुक्लपक्षस्य कार्तिके निरगात्कृतम् । त्रेता सिततृतीयायां वैशाखे समपद्यत ॥ दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् । कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः । युगादयः स्मृता ह्येते दत्तस्याक्षयकारकाः ॥

सोमग्रहे तच्छतघ्नं तच्छतघ्नं रवेर्ग्रहे ॥
तच्छतघ्नं (१)व्यतीपाते दानं वेदविदो विदुः ।

( ध ) पाद्मे—
पैतृकं मुनिभिः प्रोक्तममावास्यादिनं यथा ।
दिनं तथा पौर्णमासं दैविकं परिकीर्तितम् ॥
माघ्यां तु माधवो देवो फाल्गुन्यां रजनीकरः ।
चैत्र्यां तु देवो ह्यानन्दो वैशाख्यां पितृदेवता ॥
ज्यैष्ठ्यां तु ब्रह्मा सावित्री आषाढ्यां तु विशेषतः ।
मार्गशीर्षे देवपितरौ मनुष्या यक्षकिन्नराः ॥
देवी भवानी पौष्यां तु प्रीता भवति सर्वदा ।
वैशाखी कार्तिकी माघी रौद्री ब्राह्मी च वैष्णवी ॥

[ श्रवण, अश्विनी, धनिष्ठा, आर्द्रा और आश्लेषा के प्रथमचरण में यदि अमावास्या और रविवार हो तो वह व्यतीपात कहलाता है ।]
( घ ) पद्मपुराण—जैसे मुनियोंने अमावास्या को पितरों का दिन बतलाया है, वैसे ही पूर्णिमा को देवताओं का दिन जानना चाहिये । माघ की पूर्णिमा का देवता—विष्णु, फाल्गुनकी पूर्णिमाका चन्द्रमा, चैत्र की पूर्णिमा का आनन्द, वैशाख की पूर्णिमा का पितृदेवता, ज्येष्ठ की पूर्णिमा का ब्रह्मा, आषाढ की पूर्णिमा की सावित्री और अगहन की पूर्णिमा के देवता—देव, पितर, मनुष्य, यक्ष और किन्नर हैं । पूस की पूर्णिमा में भवानी—देवी, वैशाख

( १ ) वृद्धमनुना— श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके । यद्यमा-रविवारेण व्यतीपातः स उच्यते ॥ नागदैवतम्—आश्लेषा । मस्तके—प्रथमचरणे । मस्तक इत्यस्य श्रवणादिभिः प्रत्येकं सम्बन्ध इति दिक् ।

विशेषफलदास्तस्त्र: पिण्डदानेऽक्षयं फलम् ।

( ङ ) अपरार्के—

श्रीधरः श्रावणे ज्ञेयो हृषीकेशस्ततः परम् ।
पद्मनाभ आश्वयुजे ततो दामोदरो मतः ॥

श्रावणभाद्राश्विनकार्तिकमासाश्चातुर्मास्याः, एषु शुभकार्याणि न भवन्ति, किन्तु विशेषतो वैष्णवव्रतादीनि भवन्ति ।

इति कालविवेचनम् ।

---

## अथ दानविधिः ।

( क ) तत्रादौ दातृकृत्यम् । वाराहपुराणे—

(१)सुस्नातः सम्यगाचान्तः कृतसन्ध्यादिकक्रियः ।

---

की पूर्णिमा में रौद्री, कार्तिक की पूर्णिमा में ब्राह्मी और माघ की पूर्णिमा में वैष्णवी—देवी विशेष फल देनेवाली हैं, इन पूर्णिमाओं में पिण्डदान का अक्षय फल है । (ङ) अपरार्क—श्रावण में श्रीधर, भाद्र में हृषीकेश, आश्विन में पद्मनाभ और कार्तिक में दामोदर देवता माने गये हैं । श्रावण, भाद्र, आश्विन और कार्तिक, ये चारो चातुर्मास्य हैं, इनमें शुभ कार्य नही होते, किन्तु विशेष करके इनमें वैष्णव—व्रत होता है । इति काल विवेचन ।

## दानकी विधि ।

( क ) पहले दाता का कर्तव्य, वाराहपुराण—भली भांति स्नान,

---

( १ ) स्नातोऽधिकारो भवति दैवे पित्र्ये च कर्मणि । पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥ इति विष्णुः । विश्वामित्रः—महानिशा द्वे घटिके रात्रौ मध्यमयामयोः । नैमित्तिकं तथा कुर्यान्नित्यं तु न मनागपि ॥

कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः ॥

( ख ) कात्यायनः—

कुशोपरिनिविष्टेन तथा यज्ञोपवीतिना ।
देयं प्रतिग्रहीतव्यमन्यथा विफलं भवेत् ॥

( ग ) स्मृत्यन्तरे—

दद्यात्पूर्वमुखो दानं गृह्णीयादुत्तरामुखः ।

---

आचमन और सन्ध्यादि क्रिया करके काम, क्रोध विहीन, पाखण्डियोंके स्पर्शास्पर्श से बचकर दान दे ।

[ स्नान किये हुये पुरुष का देव पितर संबन्धी कर्ममें, मन्त्रों के जप और विधियुक्त दान देने में अधिकार है । रात्रिके मध्यमयाम लगभग बारह बजे के, दो घड़ी 'महानिशा' कहलाती है, उस समय नैमित्तिक कर्म करना चाहिये और नित्यकर्म कुछ भी न करना चाहिये । गोधूलि से वायव्य, समुद्रादि में वारुण, 'आपो हिष्ठा' इत्यादि मन्त्रों से ब्राह्म, मेघ जल और सूर्य के प्रकाश से दिव्य नामक चार प्रकारका स्नान, स्नानविधि को जानने वालों ने बतलाया है, हे युधिष्ठिर ! सब स्नानों में वारुण–स्नान उत्तम है । ]

( ख ) कात्यायन–कुशासन या उसके अभाव में नीचे कुश रखकर उस पर ऊर्णासन बिछा बैठकर बायां स्कन्धस्थित यज्ञोपवीत रक्खे ही दान दे और ले, इसके विपरीत करने से दान विफल होता है । ( ग ) स्मृत्यन्तर–पूर्वमुख होकर दान दे और

---

वायव्यं गोरजःस्नानं वारुणं सागरादिषु । ब्राह्मं ब्राह्मणमन्त्रोक्तं दिव्यं मेघाम्बुभास्करम् ॥ स्नानं चतुर्विधं प्रोक्तं स्नानवद्भिर्युधिष्ठिर । सर्वेषामेव स्नानानां विशिष्टं तत्र वारुणम् ॥

आयुर्विवर्द्धते दातुर्ग्रहीतुः क्षीयते न तत् ॥
नामगोत्रे समुच्चार्य सम्यक्श्रद्धाऽन्वितो ददे(१)त् ।
सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे इति ॥
न ममेति स्वस्वत्वस्य निवृत्तिमपि कीर्तयेत् ।

( घ )गौतमः—

अन्तर्जानुकरं कृत्वा सकुशं तु तिलोदकम् ।
फलान्यपि च सन्धाय प्रदद्याच्छ्रद्धयाऽन्वितः ॥

( ङ ) लघुहारीतः—

दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम् ।
असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं योजनम् ॥

( च ) आपस्तम्बः—

आर्द्रवासास्तु यः कुर्याज्जपहोमं प्रतिग्रहम् ।

---

उत्तरमुख होकर दान ले, इसप्रकार दान देने और लेने से दाता की आयु बढती है तथा दान लेने वाले की आयु नहीं घटती है। संकल्प वाक्य में देश, काल, नाम और गोत्र का उच्चारण करके 'तुम्हें देता हूं' ऐसा कह कर श्रद्धा से अच्छीतरह दान दे, 'मेरा नहीं है' ऐसा कहकर उस वस्तु पर से अपना अधिकार हटा ले। ( घ ) गौतम–दहिने हाथको जंघे के भीतर करके कुश, तिल और जल लेकर जिस फल की इच्छासे दान देता हो, उसे कह कर श्रद्धा से दान दे। ( ङ ) लघुहारीत–बिना कुशाके सन्ध्या, बिना जल के दान और बिना संख्या के जप, ये सब फल रहित हैं। ( च ) आपस्तम्ब–जो भीगा वस्त्र पहने और

---

( १ ) अत्राप्यनुदात्तत्वात्परस्मैपदम् ।

सर्वं तद्राक्षसं विन्देद्बहिर्जानु च यत्कृतम् ॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनः ॥

( छ ) नन्दिपुराणे—

किं त्वं वेत्सीति वक्तव्यो न दात्रा ब्राह्मणः क्वचित् ।
सोऽपि पृष्टः स्वयं तेन दानार्थं तं न कीर्तयेत ॥

( ज ) यमः—

शीलं संवसनाज्ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा संकथनाज्ज्ञेयं त्रिभिः पात्रं परीक्ष्यते ॥

( झ ) भविष्ये—

अदत्तदक्षिणां दानं व्रतं चैव नृपोत्तम ।

---

जंघे के बाहर हाथ करके जप, होम और प्रतिग्रह करता है, वह सब राक्षस कर्म कहलाता है। वेद जानने वाले ब्राह्मणों को चाहिये कि 'ॐ' का उच्चारण करके विधि के अनुसार यज्ञ, दान और तप आदि कर्म करे। ( छ ) नन्दिपुराण–'तुम क्या जानते हो' ऐसा प्रश्न दाता को ब्राह्मणसे दान समय में न करना चाहिये और वह ब्राह्मण भी ऐसा पूछने पर दान के अर्थ अपनी विद्या या गुण का कीर्तन न करे। तो फिर पात्र परीक्षा किस प्रकार हो? इससे उसके वस्त्र की अस्वच्छता पहनाव का ढंग तथा बैठने उठने के ढंगसे स्वभाव को जाने। ( ज ) यम–साथ में रहकर स्वभाव तथा व्यवहार से शौचाचार और बातचीत से बुद्धि (ज्ञान) को जाने, इन्हीं तीनों प्रकार से योग्यता की परीक्षा होती है। ( झ ) भविष्य पुराण–हे राजन्! जैसे राख में होम किये का कुछ फल नहीं है,

विफलं तद्विजानीयाद्भस्मनीव यथा हुतम् ॥

( ञ ) मनुः—

यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं तु परिकीर्तनात् ॥

( ट ) धौम्यः—

दानकाले तु सम्प्राप्ते पात्रस्यासन्निधौ जलम् ।
अन्यविप्रकरे दत्वा दानं पात्रे निधीयते ।

( ठ ) षट्त्रिंशन्मते—

द्रव्यपात्रविकर्षश्चेत्परोक्षं दातुमुद्यतः ।
तद् यायाद्वै भुवं पात्रं द्रव्यमादित्यदैवतम् ॥

---

वैसे ही बिना दक्षिणा के दान और व्रत का कुछ फल नही है। ( ञ ) मनु–झूठ बोलने से यज्ञ, शंका करने से तप, ब्राह्मणों की निन्दा करने से आयु और कहने से दान नष्ट होता है। ( ट ) धौम्य–दान देने के समय में जिस योग्य ब्राह्मण को दान देना है, वह उपस्थित न हो तो दूसरे ब्राह्मण के हाथ में उस अभीष्ट ब्राह्मण के निमित्त दान का संकल्प देकर कालान्तर में उस ब्राह्मण से भेट होने पर दान की वस्तु उसको दे। ( ठ ) षट्त्रिंशन्मत–यदि देयवस्तु और योग्य ब्राह्मण ये दोनों उपस्थित न हों और दान देना ही अभिमत हो तो वहां पर भूमि तो ब्राह्मणरूपी योग्य पात्र है और दानवस्तु सूर्य भगवान् हैं। अर्थात् भूमि तथा सूर्य को साक्षी देकर संकल्पयुक्त देयवस्तु और ब्राह्मण के नाम का कथन करके जल पृथ्वी पर छोड दे और जब ब्राह्मण तथा वस्तु प्राप्त हो तब वह उसको दे दे, अन्यथा प्रतिज्ञा-भंग दोष होगा। अथवा

परोक्षे कल्पितं दानं पात्राभावे कथं भवेत् ।
गोत्रजेभ्यस्तदा दद्यात्तदभावेऽस्य बन्धुषु ॥

( ङ ) नारदीये—

मनसा पात्रमुद्दिश्य जलं भूमौ विनिःक्षिपेत् ।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥

इति दातृकृत्यम् ।

---

अथ प्रतिग्रहीतृकृत्यम् ।

( क ) ब्रह्माण्डपुराणे—

शुचिः पवित्रपाणिश्च गृह्णीयादुत्तरामुखः ।
अभीष्टदेवतां ध्यायन् गृह्णीयात्प्रयतः शुचिः ॥

( ख ) आदित्यपुराणे—

ओङ्कारमुच्चरन् प्राज्ञो द्रविणं सकुशोदकम् ।

---

देयवस्तु तो उपस्थित हो और ब्राह्मण अनुपस्थित हो तो उसके गोत्रजों को वह दान दे, उनके अभाव में उसके सम्बन्धियों को दान दे। ( ङ ) नारदपुराण–ब्राह्मणाभाव में उस ब्राह्मण का मन से उद्देश्य करके संकल्पात्मक जल भूमि में छोड़ दे, समुद्र का अन्त है पर दान का अन्त नहीं है। इति दाता कृत्य।

प्रतिग्रहीता का कर्त्तव्य ।

( क ) ब्रह्माण्डपुराण–दान देने वाला जितेन्द्रिय और पवित्र होकर अँगुलियों में पवित्रो (पैती) धारण किये अपने इष्टदेवता को सच्चे मनसे ध्यान करते हुए उत्तराभिमुख अँगौछा ओढ़कर बैठे और अपने हाथ को जंघे के भीतर रखकर दाता के अभीष्ट फल की पूर्त्ति की कामना करते हुए उससे दान ले। (ख) आदित्य-

गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्तयेत् ॥
सोङ्कारं ब्राह्मणे कुर्यान्निरोङ्कारं महीपतौ ।
उपांशु च तथा वैश्ये मनसा स्वस्ति शूद्रजे ॥

इति प्रतिग्रहीतृकृत्यम् ।

---

## अथ धान्यमानम् ।

( ग ) भविष्ये—

(१)पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।

---

पुराण—विद्वान् ओंकार का उच्चारण करते हुए कुश जल के सहित सुवर्णादि द्रव्य को अपने दहिने हाथ में ले, दान लेने के बाद दाता ब्राह्मण होतो उसे 'ॐ स्वस्ति' क्षत्रिय हो तो 'स्वस्ति' और वैश्य हो तो धीरे से 'स्वस्ति' कहे, अगर इसी तरह दाता शूद्र है तो मन से 'स्वस्ति' कह दे। इति प्रतिग्रहीताकृत्य।

### धान्य का मान।

[ ५ वा ८ रत्ती का १ माषा, १६ माषा=८० वा १२८ रत्ती १ कष अर्थात् १ तोला, ४ तोले का १ पल, जिसे भाषा में छंटाक कहते हैं।]

| भविष्यपुराणोक्त मान। | वर्तमान मान। |
|---|---|
| २ पल—१ प्रसृत | ८ तोला। |

---

( १ ) गुञ्जाः पञ्चाद्यमाषक इति, ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्। इति चामरः। अन्यत्र तु अष्टाभिर्गुञ्जाभिर्माषः, तस्मादाधुनिकप्रचलितमाषस्तु अष्टगुञ्जाभिः ( अष्टरत्तिकाभिः ) भवति। प्राचीनमाषः पञ्चगुञ्जाभिर्भवति। तदित्थम्—५ वा ८ गुञ्जाः=एको माषः। १६ माषाः=८० वा १२८ गुञ्जाः=एकः कर्षः, तोलकम्। ४ कर्षास्तोलकानि

चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः ।
कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश ॥
एतेषां रुचिशक्तिदेशकालाद्यपेक्षयाव्यवस्था बोध्या ।
इति धान्यादिमानम् ।

---

## अथ दक्षिणाप्रमाणम् ।

( क ) षट्त्रिंशन्मते—

अदक्षिणं तु यद्दानं तत्सर्वं निष्फलं भवेत् ।

( ख ) व्यासः—

सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव च ।

---

| भविष्यपुराणोक्त मान । | वर्तमान मान । |
|---|---|
| २ प्रसृत—१ कुडव | ३ छंटाक, १ तोला । |
| ४ कुडव—१ प्रस्थ | ३ पाव, ४ तोला । |
| ४ प्रस्थ—१ आढक | ३ सेर, ३ छंटाक, १ तोला । |
| ४ आढक—१ द्रोण | १२ सेर, ३ पाव, ४ तोला । |
| २ द्रोण—१ कुंभ या शूर्प | २५ सेर, ८ छंटाक, ८ तोला । |
| १६ द्रोण—१ खारी | ५ मन, ४ सेर, १ छंटाक, ४ तोला । |

इस धान्यमान की व्यवस्था रुचि, शक्ति, देश और काल आदि के अनुसार जाननी चाहिये । इति धान्य मान ।

## दक्षिणा का प्रमाण ।

(क) षट्त्रिंशन्मत—बिना दक्षिणा के दान निष्फल है । (ख) व्यास—सोना, चांदी, तांबा, चावल, धान्य, नित्यश्राद्ध और देव

---

वा = एकः पलम्। अस्य लोके भाषायां 'छंटाक' इत्याख्यया प्रसिद्धिरिति।

नित्यश्राद्धं देवपूजा सर्वमेव सदक्षिणम् ॥

( ग ) स्कान्दे—

देयद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत् ।
अनुक्तदक्षिणे दाने दशांशं वाऽपि शक्तितः ॥

इति दक्षिणाप्रमाणम् ।

( क ) एतेन बह्वार्षमतप्रदर्शनेनायं निष्कर्षः—यत्सर्वेषु (१)षोडशमहादान (२)दशमहादानदशदाना(३)तिदानत्रया

पूजा, ये सब दक्षिणा के साथ होते हैं। (ग) स्कन्दपुराण—जहां दक्षिणा कही गयी है वहां देयवस्तु के तीसरे भाग की दक्षिणा दे, जिस दान में दक्षिणा नहीं कही गयी है वहां देय वस्तु की दशांश अथवा यथाशक्ति दक्षिणा देवै। इति दक्षिणादान।

(क) ऋषियों के इन वचनों को दिखलाने का निष्कर्ष यह है

( १ ) मात्स्ये—अथातः संप्रवक्ष्यामि महादानानुकीर्तनम् । यत्त षोडशधा प्रोक्तं वासुदेवेन भूतले ॥ आद्यं तु सर्वदानानां तुलापुरुषसंज्ञितम्। हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ॥ कल्पपादपदानं च गोसहस्रं च पञ्चमम् । हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥ हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा । पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥ द्वादशं विश्वचक्रं च ततः कल्पलतात्मकम् । सप्तसागरदानं च रत्नधेनुस्तथैव च ॥ महाभूतघटस्तद्वद् षोडशः परिकीर्तितः ।

( २ ) कौर्मे—कनकाश्वतिलानागा दासीरथमहीगृहाः । कन्या च कपिलाधेनुर्महादानानि वै दश॥ दशदानानि तु-गोभूतिलहिरण्याज्यवासोधान्यगुडानि च । रौप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ॥ इति जातूकर्ण्यः ।

( ३ ) भविष्ये—त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । नरकादुद्धरन्त्येव जपवापनदोहनैः ॥

# (१)नन्तफलदान(२)सर्वसंपत्करदानेष्वन्नोदकदानं विशिष्यते । अन्येषूक्तानुक्तेषु दानेषु पात्रदेशकालद्रव्याणां नियमः, स

कि षोडशमहादान—

[ तुलापुरुष १ हिरण्यगर्भ २ ब्रह्माण्ड ३ कल्पपादप ४ गोसहस्र ५ हिरण्यकामधेनु ६ हिरण्याश्व ७ हिरण्याश्वरथ ८ हेमहस्तिरथ ९ पञ्चलाङ्गलक १० पृथ्वी ११ विश्वचक्र १२ कल्पलता १३ सप्तसागर १४ रत्नधेनु १५ और महाभूतघट का दान १६ ]

दश महादान—

[ सुवर्ण १ अश्व २ तिल ३ सर्प ४ दासी ५ रथ ६ पृथ्वी ७ गृह ८ कन्या ९ और कपिला गाय १० ] दशदान—[ गौ १ पृथ्वी २ तिल ३ सुवर्ण ४ घृत ५ वस्त्र ६ धान्य ७ गुड ८ चांदी ९ और नमक १० ]

तीन अतिदान—

[ गौ, १ पृथ्वी २ और सरस्वती ३ ]

अनन्तफलदान—

[ नियम से आरोग्यता और भोग साधन का संपादन, अभय, पान्थ–शुश्रूषा, अन्नोदक और वृक्ष आदि ]

---

( १ ) दानसङ्ग्रहे—सम्पादयेच्च नियमादारोग्यं भोगसाधनम् । अभयं पान्थशुश्रूषामन्नोदकमहीरुहान् ॥ अनन्तफलदान्याहुर्दानान्येतानि सूरयः ।

( २ ) दानसङ्ग्रहे–तडागकर्ता वसति स्वर्गे युगचतुष्टयम् । अग्निष्टोमसमः कूपः सोऽश्वमेधसमो मरौ ॥ तारयेद् वृक्षरोपी च तस्माद् वृक्षाँश्च रोपयेत् । देवेभ्योऽथ द्विजातिभ्यो यो दद्यात्सफलं द्रुमम् ॥ स पीयूषभुजां लोके सेव्यमानो वरोरुभिः । क्रीडारामं तु यः कुर्यादुद्यानं पुरसंयुतम् ॥ तोयाश्रयसमायुक्तं गुप्तं फलसमुद्धृतम् । स गच्छेच्छङ्करपुरं वासस्तत्र युगत्रयम् ॥ इति सर्वसंपत्करदानानि ।

तु नात्रान्नदाने निरीक्ष्यते। ब्राह्मणादिचाण्डालपर्यन्तेषु जनेषु दीयमानेऽन्नोदके न दोषः, तस्मात्सर्वदानं परित्यज्य अन्नदानं तु नित्यशः। तदन्नदानं कथं कार्यमित्यपेक्षायां शास्त्राभिमतं मार्गद्वयं निरूप्यते—

तत्र प्रथमो यथा, सर्वेभ्य एव प्रार्थयमानेभ्यः पङ्ग्वन्धादिभ्यो ब्राह्मणाब्राह्मणादिविचारौदासीन्येन यथावश्यकं यथाशक्ति सर्वकालमन्नोदकं देयमिति।

द्वितीयस्तु यथा, शुक्लयजुर्वेदसंहितायामष्टादशाध्याये—

ॐ व्रीहयश्च मे १ यवाश्च मे २ माषाश्च मे ३ तिलाश्च मे ४ मुद्गाश्च मे ५ खल्वाश्च मे ६ प्रियङ्गवश्च मे ७ ऽणवश्च मे ८ श्यामाकाश्च मे ९ नीवाराश्च मे १० गोधूमाश्च मे ११ मसूराश्च मे १२ यज्ञेन कल्पन्ताम्।

---

सर्वसंपत्करदान—

[ तालाव कूप बनवाना, वृक्ष लगाना, सफल वृक्ष का दान, तालाव और गांव के सहित विहार वाटिका का निर्माण आदि ]

से अन्न जल का दान सर्वोपरि है। अन्य कहे न कहे दानों में योग्य ब्राह्मण, देश, काल और द्रव्य का नियम है, किन्तु वह इस अन्न जल के दान में नहीं देखा जाता। ब्राह्मणसे लेकर चांडाल तक को अन्न जल देने में दोष नही है, इसलिये सब दानों में अन्नदान नित्य है। उसका दान कैसे किया जाय, ऐसी विवेचना होने पर शास्त्रसंमत दो मार्ग दिखलाये जाते हैं—

पहला यह कि ब्राह्मण अब्राह्मण का विचार किये बिना ही मांगने वाले अन्धे लूले आदि सबको उनके आवश्यकतानुसार यथाशक्ति सबकाल में अन्न जल देना चाहिये।

इति द्वादशीकण्डिकायां श्रीभगवता वेदपुरुषेण द्वादशधान्यान्युपदिष्टानि, तत्र कालनियमो नोपदिष्टः । तथैव स्मृतिपुराणादिधर्मशास्त्रग्रन्थेष्वपि कालनियमो नोक्तः, तथा चोक्तं देवीभागवते—

अन्नदानात्परं दानं न भूतं न भविष्यति ।
नात्र पात्रविचारोऽस्ति न कालनियमस्तथा ॥

एवं मनुनोक्तम्—

न हि कालं प्रतीक्षेत जलं दातुं तृषाऽन्विते ।
अन्नोदकं सदा देयमित्याह भगवान्मनुः ॥

इत्यादिवचनैः श्रुतिस्मृतिपुराणानामेकवाक्यता, न तत्र

---

दूसरा यह कि शुक्लयजुर्वेदसंहिता के अट्ठारहवें अध्याय के बारहवें मंत्र में—धान, यव, उड़द, तिल, मूंग, चना, काकुन, चीना, या महीन धान, तिनी, गेहूं और मसूर—ये बारह धान्य ही का भगवान् वेदपुरुषने उपदेश किया है, इसमें कालके नियम का उपदेश नही किया है। उसी तरह स्मृति पुराण आदि धर्म-शास्त्र ग्रन्थों में भी समय का नियम नही कहा गया है। जैसे कि देवीभागवत में कहा है—

"अन्नदानसे श्रेष्ठ दान न हुआ न होगा, अन्नदान में योग्य का विचार नहीं है और न काल का नियम है।"

इसी तरह मनुने कहा है—

"जैसे प्यासे को जल देने के लिये समय की प्रतीक्षा नहीं की जाती, वैसे ही अन्न जल सदा देना चाहिये—ऐसा भगवान् मनु कहे हैं।"

इत्यादि वचनों से श्रुति स्मृति और पुराणों की एकवाक्यता

विरोधः । तस्मात्सर्वदा सर्वेषां धान्यानां दानं कर्तव्यमिति सिद्धम् । शास्त्रेषु यस्मिन्यस्मिन पुण्यमासे यस्य यस्य धान्यस्य विधानं प्राप्तं तस्मिन्तस्मिन्मासे वेदोक्तद्वादशधान्यानां वियोगः कृतः । शास्त्रेषु येषां मासपरकविधानं नोपलब्धं तेषां स्वयुक्त्या विनियोगः कृतः ।

तथा हि—

( क )प्रथमे मेषे वैशाखे मासि प्रत्यहं यवोत्थसक्तूञ्जलं च दद्यात् ।

---

है, उनमें विरोध नहीं होता है । इसलिये सदा सब अन्नों का दान करना चाहिये, यह सिद्ध हुआ । शास्त्रों में जिस जिस पुण्यमास में जिस जिस धान्य की विधि प्राप्त है, उस उस मासमें वेदोक्त बारह अन्नों का विनियोग किया गया है और शास्त्रों में जिन अन्नों का मास परक विधान नही प्राप्त हुआ, उनका विनियोग अपनी युक्ति से किया है । जैसे—

**(क) पहले मेष की संक्रान्ति या वैशाख में प्रतिदिन यव की सत्तू और जल नीचे लिखी विधि से देवै ।**

दाता नित्यकर्म करके कुशासनादि शुभ आसन पर पूर्वमुख बैठ हाथों की दोनों अनामिका अङ्गुलियों में "पवित्रेस्थो०" इत्यादि उपरोक्त मन्त्रसे पैती पहनकर और प्रतिग्रहीता को उत्तर मुख बैठा आचमन प्राणायाम करे। फिर "अपवित्रः" इस मन्त्रको पढकर त्रिकुशे से जल लेकर अपने शरीर और दान की वस्तु पर छिड़के । बाद में चन्दन, अक्षत और फूल वा पंचोपचार (गन्धपुष्प–धूप–दीप–नैवेद्य ) से देयवस्तु और ब्राह्मण का पूजन करके

तद्यथा—

कृतनित्यक्रियो दाता शुभासने प्राङ्मुख (१)उपविश्य प्रतिग्रहीतारञ्चोदङ्मुखमुपवेश्य, "ॐ पवित्रेस्थो व्वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ इति(२)मन्त्रेण धृतकरद्वयपवित्रः, आचम्य, (३)प्राणानायम्य, ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इति मन्त्रेण कुशत्रयैरात्मानं देयसम्भारांश्च (४)सम्प्रोक्ष्य गन्धाक्षतपुष्पैः पञ्चोपचारैर्वा देयवस्तूनि ब्राह्मणं च सम्पूज्य, 'इमान् यवोत्थसक्तून् ददानि' इति वाक्येन ब्राह्मणकरे जलं दद्यात्। ब्राह्मणः— 'ॐ ददस्व' इति प्रतिब्रूयात्। ततो वारिणा पुनर्देयद्रव्यमभिषिच्यकुशत्रयजलाक्षतादीन्यादाय देशकालौ स्मृत्वा, अमुकगोत्रोऽमुकशर्म्मा श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामनया श्रीपरमे-

---

'इमान्यवोत्थसक्तून ददानि' इस वाक्यको पढकर ब्राह्मण के हाथ में जल देवे। ब्राह्मण—उत्तर में 'ॐ ददस्व' ऐसा कहे। इसके बाद पुनः त्रिकुशे के जलसे दानकी वस्तु को सींचकर त्रिकुशा,

---

(१) नारसिंहे—आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

(२) प्रयोगपारिजाते—मन्त्रं विना धृतं यत्तु पवित्रमफलं भवेत्।

(३) प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः।

(४) नाप्रोक्षितं स्पृशेत्किञ्चिद्दैवे पित्र्ये च कर्मणि। इति श्राद्धविवेके।

श्वरप्रीत्यर्थमिमान् यवोत्थसक्तून् (आमान्नयवान् वा) प्रजापतिदैवत्यान् सदक्षिणान् जलं च वरुणदैवत्यममुकगोत्रायामुकशर्म्मणो ब्राह्मणाय तुभ्यमहं संप्रददे न मम, इति दद्यात् । ब्राह्मणः—'ॐ स्वस्ति' (क्षत्रियादिदातरि 'स्वस्ति') इति वदेदिति संक्षेपः ।

सक्तुदानमन्त्रः—

सक्तवो धर्मदा नित्यं ब्रह्मणः प्रीतिकारकाः ।
त्वद्दानान्मम दुष्कर्मक्षयोऽस्तु सुखमस्तु मे ॥
प्राजापत्या यतः प्रोक्ताः सक्तवो यज्ञकर्मणि ।
तस्मादेषां प्रदानेन प्रीयतां मे प्रजापतिः ॥

सक्त्वभावे आमयवदाने त्वयं मन्त्रः—

धान्यराजाश्च माङ्गल्ये द्विजप्रीतिकरा यवाः ।
तस्मादेषां प्रदानेन ममास्त्वभिमतं फलम् ॥

जलदानमन्त्रः—

उदकुम्भो मया दत्तो ग्रीष्मकाले दिने दिने ।
शीतोदकप्रदानेन प्रीयतां मधुसूदनः ॥

---

जल और अक्षत आदि से उपरोक्त सङ्कल्प को पढकर दान देवे और मन्त्र पढ़े । ब्राह्मण–दान ग्रहण करते समय 'ॐ स्वस्ति' (क्षत्रिय आदि दाता हो तो केवल 'स्वस्ति') कहे । इसी तरह आगे प्रत्येक मास में दानकी संक्षिप्त–विधि जाननी चाहिये, केवल संकल्पादि बदल जायगें ।

( ख ) विशेषतो वैशाख्यां शक्तौ सकलमासि वा व्यजनं दद्यात् ।

तत्र सङ्कल्पः—

इदं व्यजनं वायुदैवत्यं सदक्षिणाकममुकगोत्रायेत्यादिबोध्यः ।

मन्त्रस्तु—

व्यजनं वायुदैवत्यं ग्रीष्मकाले सुखप्रदम् ।
अस्य प्रदानात्सकलाः मम सन्तु मनोरथाः ।। इति ।

अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

मेषसंक्रमणे भानोर्मेषदानं महाफलम् ।

( घ ) दानसङ्ग्रहे—

ददाति यो हि मेषादौ सक्तूनम्बुघटान्वितान् ।
पितृनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते ।।

---

(ख) विशेष करके वैशाख की पूर्णिमा में या समर्थ होने पर यथेच्छ संपूर्ण वैशाखमास भर पंखे के दान का महाफल है, अतः उपरोक्त सङ्कल्प और मन्त्र पढ़कर पंखे का दान करै ।

मूलवचन ।

(ग) हेमाद्रि में विश्वामित्र—मेष की संक्रान्ति में भेंडों के दान का महाफल है । (घ) दानसंग्रह—जो पितरों के उद्देश्य से मेषादि संक्रान्तियों में ब्राह्मणों को सजलकुम्भ और सत्तू देता है, वह

( ङ ) श्रीदेवीभागवते—

वैशाखे सक्तुदानं च यः करोति द्विजातये ।
सक्तुरेणुप्रमाणाब्दं मोदते शिवमन्दिरे ॥

( च ) स्कान्दे—

सर्वदानेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
तत्फलं समवाप्नोति माधवे जलदानतः ॥
सलिलं सलिलाकाङ्क्षी छायां छायामपीच्छुना ।
व्यजनं व्यजनाकाङ्क्षी वैशाखे मासि भूमिप ॥
माधवे मासि सम्प्राप्ते ब्राह्मणाय कुटुम्बिने ।
व्यजनं च जलं छत्रमेषां दानं विशिष्यते ॥
न तक्रसदृशं दानं घर्मकालेषु विद्यते ।
जम्बीररसुरसोपेतं लसल्लवणमिश्रितम् ॥

---

सब पापों से मुक्त हो जाता है। (ङ) देवीभावत–जो ब्राह्मणों को वैशाख में सत्तू देता है, वह दी हुई सत्तू की धूलि ( सूक्ष्मकण ) के बराबर वर्ष तक शिवलोक ( कैलास ) में आनन्दित होता है। (च) स्कन्दपुराण–सब दानों से पुण्य और सब तीर्थों में जाने से जो फल होता है, वह वैशाख में जलदान करने से ही प्राप्त हो जाता है। हे राजन् ! वैशाख मास में जन्मान्तर में जल प्राप्त करने की अभिलाषा से जल, छाया प्राप्ति की आकांक्षा से छाया और पंखे पाने की इच्छा से पंखे का दान करे। वैशाख मास प्राप्त होने पर कुटुम्ब वाले ब्राह्मणों को पंखा, जल और छाते का दान विशेष फलप्रद है। गर्मी के दिनों में जंबीरी नीबू के स्वरस और नमक मिले माठे के दान के समान अन्य दान नहीं है। जो

यस्तक्रमरुचिघ्नं तु दद्यान्मोक्षमवाप्नुयात् ।
वैशाखे (१)पानकं चूतं सुपक्कफलमेव च ॥

इति वैशाखमासदानम् ।

**अथ मेषे वैशाखे मासि तीर्थम् ।**

( छ ) वायुपुराणे--
मेषस्नानं तु रेवायामिति दिक् ॥

---

**( क ) अथ द्वितीये वृषे ज्येष्ठे मासि प्रत्यहं (२)दध्योदनं सदधि ओदनार्थमामान्नं वा वृक्षाय जलं च दद्यात् ।**

---

अरुचि को दूर करने वाला माठा और पानक ( आम आदि फल के रस और शक्कर आदि मिला हुआ शर्बत ) तथा पके फल और आम देता है, वह मोक्ष पाता है । इति वैशाख मास दान ।

**मेष की संक्रान्ति या वैशाखमास में तीर्थ ।**

( छ ) वायुपुराण—मेष की संक्रान्ति में रेवानदी में स्नान श्रेष्ठ है । इति वैशाखमास तीर्थ ।

**(क) दूसरे वृषकी संक्रान्ति या ज्येष्ठ में प्रतिदिन**

---

( १ ) पेयपदार्थे । तत्राम्रफलपानकम्—आम्रमामं जलस्विन्नं मर्दितं दृढपाणिना । सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् ॥ प्रपानकमिदं श्रेष्ठं भीमसेनेन निर्मितम् । निम्बुफलपानकम्—भागैकं निम्बुजं तोयं षड् भागं शर्करोदकम् । लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥ एवं नारङ्गफलपानकमम्लिकाफलपानकं जम्बुफलपानकं चेति बोध्यम् ।

( २ ) दध्योदनमित्यत्र अन्नस्यापेक्षया शास्त्रे तदनुपलम्भाद्वेदोक्ता अणवो ग्राह्याः । अणवः— चीनका इति वेदभाष्यम् । चीनकाः, 'चीना'

तत्र सङ्कल्पः—

देशकालौ सङ्कीर्त्य गोत्रः शर्मा श्रुतिस्मृतिपुराणोक्तफल-प्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिदं दध्योदनं ( सदधि ओदनार्थमामान्नं वा ) प्रजापतिदैवत्यं सदक्षिणममुकगोत्रा-यामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे न मम, इति ।

दध्योदनदानमन्त्रः—

चन्द्रमण्डलमध्यस्थं चन्द्राम्बुदसमप्रभम् ।
दध्यन्नं चास्य दानेन प्रीयतां वामनो मम ॥

पृथक्कृते सति दधि ओदनं च पृथक्पृथक् प्राप्तं तयोर्म-न्त्रौ यथा, ओदनस्य—

अन्नं ब्रह्ममयं साक्षान्नराणां जीवरक्षणम् ।
ओदनस्य प्रदानेन मम सन्तु मनोरथाः ॥

दध्नः—

क्षीरेणाम्लसमुद्भूतं देवर्षिपितृतृप्तिदम् ।
दधि स्यान्मेऽमृतं नित्यमतः शान्तिं प्रयच्छ मे ॥

अथाश्वत्थमूले जलदानमन्त्रः—

सिञ्चामि तेऽश्वत्थमूलं मम सन्ततिवृद्धये ।

---

दही भात अथवा भात के लिये दधि सहित वेदोक्त कच्चा अन्न चीना या महीन धान और वृक्षको जल उपरोक्त

---

इति विहारादिप्रान्ते प्रसिद्धाः । व्रीहिभेदस्त्वणुः पुमानित्यमरः । चीनकाः षष्टिकविशेषा इति हेमाद्रिः । षष्टिकास्तु व्रीहिभेदा इति ।

अश्वत्थरूपी भगवान् प्रीयतां मे जनार्दनः ॥

( ख ) विशेषतो ज्यैष्ठ्यां शक्तौ सकलमासि वा उपानद्दानम् ।

तत्र सङ्कल्पः—

इमे उपानहौ अङ्गिरोदैवत्यौ सदक्षिणौ अमुकगोत्रायेत्यादिर्बोध्यः ।

मन्त्रस्तु—

उपानहौ प्रदत्ते मे कण्टकादिनिवारणे ।
सर्वमार्गेषु सुखदे अतः शान्तिं प्रयच्छ मे ॥

अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

वृषसङ्क्रमणे दानं गवां प्रोक्तं तथैव च ।

( घ ) भविष्ये—

ज्येष्ठमासे विशेषेण ब्राह्मणेभ्यो दिने दिने ।

---

संकल्प और मन्त्र पढकर देना चाहिये ।

(ख) विशेष करके ज्येष्ठ की पूर्णिमा में या शक्ति होने पर यथेच्छ संपूर्ण ज्येष्ठमास भर जूता के दान का महाफल है, अतः उपरोक्त संकल्प और मंत्र पढकर जूतों का दान करे ।

मूलवचन ।

(ग) हेमाद्रि में विश्वामित्र—वृष की संक्रान्ति में गाय के दान का महाफल कहा है । (घ) भविष्यपुराण—ज्येष्ठमास में देवताओं

दध्योदनं प्रदातव्यं देवानां तुष्टिहेतवे ॥
तोयं तु सर्वबीजानां जन्तूनां तु विशेषतः ।
जीवनं सर्वकालेषु तस्मादन्नसमं महत् ॥
अश्वत्थवटवृक्षादीन् सिञ्चन् बहुविधैर्जलैः ।
जलदानात्परं दानं न भूतं न भविष्यति ॥
उदकुम्भाम्बुदानं च तालवृन्तं सचन्दनम् ।
त्रिविक्रमस्य प्रीत्यर्थं छत्रं चोपानहं तथा ॥

इति ज्येष्ठमासदानम् ।

## अथ वृषे ज्येष्ठे तीर्थम् ।

( ङ ) भविष्यपुराणे—

स्नानं ज्येष्ठे हि कर्तव्यं सर्वपापप्रशान्तये ।
दशाश्वमेधिके तीर्थे गङ्गालोकान्विमृज्यते ॥

---

की प्रसन्नता के लिये ब्राह्मणों को प्रतिदिन विशेष करके दही भात देना चाहिये। जल सब समय में सभी बीज और विशेषतः प्राणियों का जीवन है, इससे जल अन्नके समान महत्व का है। पीपर बड़ आदि वृक्षों को जल से बहुत प्रकार से सींचता हुआ पुरुष अधिक पुण्यवान् होता है, क्यों कि जलदान से उत्तम दान न हुआ और न होगा। सजलकुंभ तथा जल, चन्दन के सहित पंखा, छाता और जूता विष्णु की प्रसन्नता के लिये देवै। इति ज्येष्ठमास दान।

## वृषकी संक्रान्ति या ज्येष्ठ में तीर्थ।

(ङ) भविष्यपुराण—ज्येष्ठ में सब पापों को दूर करने के लिये दशाश्वमेध-तीर्थ में स्नान करना चाहिये, इससे वह गंगा

दृष्ट्वा दशाश्वमेधेशं पुनर्जन्म न विद्यते ।
तत्र पुण्यतमा ज्ञेया दिवसा वृषसम्मिताः ।। इति दिक् ।

---

( क ) अथ तृतीये मिथुने आषाढे मासि प्रत्यहं (१)मसूरानामलकफलानि च दद्यात् ।

तत्र सङ्कल्पः—

देशकालौ स्मृत्वा, गोत्रः शर्म्मा श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमान् मसूरान् विष्णुदैवत्यान् दक्षिणायुतानामलकफलानि च वनस्पतिदैवत्यान्यमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे न मम, इति ।

मसूरदानमन्त्रः—

सवल्कला मसूरास्तु दुरितक्षयकारकाः ।
तस्मादेषां प्रदानेन विष्णुः प्रीतिकरो मम ।।

आमलकफलदानमन्त्रः—

फलानि मधुराणीह मुनिदेवप्रियाणि च ।

---

लोक को प्राप्त करता है और दशाश्वमेधेश्वर का दर्शन कर पुनर्जन्म नही लेता, वहां वृषसंक्रान्ति से परिमित दिन अत्यन्त पुण्यदायक है । इति ज्येष्ठमास तीर्थ ।

(क) तीसरे मिथुन की संक्रान्ति या आषाढमास में प्रतिदिन वेदोक्त मसूर और आंवले के फल उपरोक्त सं-

---

( १ ) अत्रान्नविशेषस्यानुक्तत्वाद् वेदोक्ता मसुरा ग्राह्याः ।

तस्मादेषां प्रदानेन सफला मे मनोरथाः ॥

( ख ) विशेषत आषाढ्यां शक्तौ सकलमासि वा सकर्पूरं चन्दनं पुराणं च यथारुचि पुस्तकं वा दद्यात् ।

तत्र सकर्पूरचन्दनदानसङ्कल्पः—

इदं सकर्पूरं चन्दनं गन्धर्वदैवत्यं लक्ष्मीप्रीतिकामोऽमुकगोत्रायेत्यादिरवसेयः ।

कर्पूरचन्दनदानमन्त्रौ तु—

कर्पूरं रुचिरं विप्र गृहाणेमं सुपूजितम् ।
पुण्यगन्धस्थिता सा मे कमला प्रीयतामिति ॥
चन्दनावासमन्दारसखेष्टं दारकार्चित ।
चन्दनस्य प्रदानान्मे सान्द्रानन्दकरो भव ॥

पुस्तकदानसङ्कल्पः—

देशकालौ सङ्कीर्त्य, गोसहस्रदानसमफलावाप्तित्वचतुर्दशविद्यावेदाङ्गपारगत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमिदं पुराणम् ( अमुकपुस्तकं वा ) सरस्वतीदैवत्यं दक्षिणायुतममुकगोत्रायेत्यादिरवगन्तव्यः ।

---

कल्प और मन्त्र पढ़कर देवै ।

(ख) विशेष करके आषाढ की पूर्णिमा में या असमर्थता न हो तो यथेच्छ संपूर्ण आषाढ मास भर उपरोक्त संकल्प और मन्त्र पढकर कपूर के सहित चन्दन, पुराण या यथा

पुस्तकदानमन्त्रः—

सर्वविद्याश्रया यस्माः करणं लिखिताक्षरम् ।
पुस्तकस्य प्रदानेन प्रीणातु मम भारती ॥
सरस्वति जगन्मातः शब्दब्रह्माधिदेवते ।
अस्याः प्रदानाद्वागीशा प्रसन्ना जन्मजन्मनि ॥

अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

वस्त्रान्नपानदानानि मिथुने विहितानि च ।

( घ ) वायुपुराणे—

उपानद्द्विगुणं छत्रं लवणामलकानि च ।
आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः ॥

( ङ ) देवीपुराणे—

आषाढे चन्दनं देयं सकर्पूरं महाफलम् ।

( च ) वायव्ये—

अष्टादशपुराणानि सहिरण्यानि (१)पर्वणि ।

---

रुचि किसी भी शास्त्रसम्बन्धी पुस्तक का दान करना चाहिये।

मूलवचन ।

(ग) हेमाद्रि में विश्वामित्र—मिथुन के सूय में वस्त्र, अन्न, और जल का दान विहित है। (घ) वायुपुराण–आषाढ में वामन देवता की प्रसन्नता के लिये भक्ति से जूता, छाता, नमक और आंवले का दान करे। (ङ) देवीपुराण–आषाढ़ में कपूर के

---

( १ ) चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविः सङ्क्रान्तिरेव च ॥

लिखित्वा यः प्रयच्छेत्तु स विद्यापारगो भवेत् ॥
रामायणं भारतं च दत्वा स्वर्गे महीयते ।
धर्मशास्त्रं नरो दत्वा स्वर्गलोके महीयते ॥

( छ ) भविष्ये—

धेनुदानसहस्रेण सम्यग् दत्तेन यत्फलम् ।
तत्फलं समवाप्नोति पुस्तकैकप्रदानतः ॥

( ज ) वाराहे—

वेदमीमांसकं दत्वा शिवधर्मं च वै नृप ।
सप्तद्वीपपृथिव्यां च राजराजो भवेद्धि सः ॥

( झ ) मात्स्ये—

वाराहकल्पवृत्तान्तमधिकृत्य पराशरः ।
यत्राह धर्मानखिलान् तद्युक्तं वैष्णवं विदुः ॥

---

सहित चन्दन देना चाहिये, इसके दान से बड़ा फल है। (च) वायुपुराण–पर्व ( अष्टमी–चतुर्दशी–अमावास्या–पूर्णिमा ) में जो अट्ठारह पुराणों को लिखकर दान करे तो वह सकल विद्या का पारग होता है। रामायण, महाभारत और धर्मशास्त्र की पुस्तकें देकर मनुष्य स्वर्ग में पूजित होता है। (छ) भविष्यपुराण–विधि विधान सहित हजार गाय के दानसे जो फल होता है, वह एक पुस्तक के दान करने से ही प्राप्त हो जाता है। (ज) वाराहपुराण–हे राजन्। जो पुरुष वेद, मीमांसा और शिव–धर्म सम्बन्धी पुस्तक का दान करता है, वह सातो द्वीप की पृथिवी के राजाओं का राजा, अर्थात् चक्रवर्ती होता है। (झ) मत्स्यपुराण–व्यासजी ने वाराहकल्प की कथा को लेकर जिस विष्णुधर्मोत्तर

तदाषाढे च यो दद्याद् घृतधेनुसमन्वितम् ।
पौर्णमास्यां विपूतात्मा सपदं याति वारुणम् ॥

इत्याषाढमासदानम् ।

अथ मिथुने आषाढे तीर्थम् ।

( ज ) देवीपुराणे--
आषाढे तापिका नदी, इति दिक् ।

---

( क ) अथ चतुर्थे कर्के श्रावणे मासि प्रत्यहं (१)प्रियङ्गुं (२)शाकं च दद्यात् ।

तत्र सङ्कल्पः--

देशकालौ सङ्कीर्त्य, गोत्रः शर्म्मा-श्रुतिस्मृतिपुराणोक्तफल-प्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमान् प्रियङ्गून् विष्णु-दैवत्यान सदक्षिणान् शाकं च वनस्पतिदैवत्यममुकगोत्रा-

---

पुराण में संपूर्ण धर्मों का प्रतिपादन किया है, उसे घृतधेनु सहित जो आषाढ की पूर्णिमा में देता है, वह वरुणलोक पाता है। इति आषाढमास दान ।

मिथुन के सूर्य या आषाढ में तीर्थ ।

(ज) देवीपुराण–आषाढ में तापिका नदी का स्नान श्रेष्ठ है । इति आषाढमास तीर्थ ।

(क) चौथे कर्क के सूर्य या श्रावणमास में प्रतिदिन

---

( १ ) शास्त्रे धान्यानुपलम्भाद् वेदोक्ताः प्रियङ्गवो ग्राह्याः ।

( २ ) क्षीरस्वामी-मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः । त्वक् पुष्पं कवचञ्चेति शाकं दशविधं स्मृतम् ॥

यामुकशर्म्मणो ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम, इति ।

प्रियङ्गुदानमन्त्रः—

प्रियङ्गवः प्रिया यस्मादग्नेश्च हव्यवाहनाः ।
तस्मादेषां प्रदानेन प्रीणातु पुरुषोत्तमः ॥

पत्रशाकदानमन्त्रः—

नानाविधानि पत्राणि तपोवृद्धिकराणि च ।
स्वाद्यानि ब्रह्मा प्रीणातु मां रसैः शाकदानतः ॥

कन्दमूलादिदानमन्त्रः—

ब्रह्मणा निर्मिताः पूर्वं व्रतीनां पुष्टिहेतवे ।
तस्मादेषां प्रदानेन पुष्टिरस्तु सदा मम ॥

( ख ) विशेषतः श्रावण्यां शक्तौ सकलमासि वा नदीसन्तारणादिपान्थपरिचर्यां यज्ञोपवीत-दानं च कुर्यात् ।

तत्र यज्ञोपवीतदानसङ्कल्पः—

अग्निष्टोमयज्ञफलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिदं

---

वेदोक्त काकुन और शाक उपरोक्त संकल्प और मन्त्र पढ़कर देना चाहिये ।

(ख) विशेष करके श्रावण की पूर्णिमा में या शक्ति होने पर यथेच्छ संपूर्ण श्रावणमास भर नदियों के पार उतरवाना आदि बटोहियों की सेवा, तथा उपरोक्त संक-ल्प और मन्त्र पढकर यज्ञोपवीत का दान करे ।

यज्ञोपवीतं सदक्षिणाकममुकगोत्रायेत्यादिर्ज्ञेयः ।

यज्ञोपवीतदानमन्त्रौ—

ब्रह्मसूत्रं महादिव्यं मया यत्नेन निर्मितम् ।
ब्राह्मं तन्मेऽस्तु ते देव ब्रह्मसूत्रप्रदानतः ॥
यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥

अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

घृत(१)धेनुप्रदानं च कर्कटे परिशिष्यते ।

( घ ) विष्णुधर्मोत्तरे—

श्रावणे वस्त्रदातुस्तु स्यात्कीर्तिः सुमहत्फलम् ।
श्रीधरप्रीतये तस्मात्घृतं क्षीरं प्रदापयेत् ॥

( ङ ) स्कान्दे नागरखण्डे—

मणिरत्नप्रबालानां रूप्यहाटकवाससाम् ।
अन्येषामपि दानानामन्नदानं विशिष्यते ॥

---

मूलवचन ।

(ग) हेमाद्रि में विश्वामित्र–कर्क की संक्रान्ति में घृतधेनु का दान कहा है (घ) विष्णुधर्मोत्तर–श्रावण में वस्त्रदान करने वालों को कीर्ति और बड़ा सुन्दर फल होता है, इसलिये श्रीविष्णुभगवान् के प्रीत्यर्थ घृत और दूध देवे । (ङ) स्कन्दपुराण नागरखण्ड–मणि, रत्न, मूंगा, चांदी, सोना और वस्त्र के दानसे तथा अन्य दानों से

---

( १ ) घृतधेनुदानविधानं हेमाद्रौ द्रष्टव्यमिति ।

अन्नोदकप्रदानं च गोप्रदानं च नित्यशः ।
वेदपाठो वह्निहोमश्चातुर्मास्ये महत्फलम् ॥
चातुर्मास्ये दुग्धदानं दधि तक्रं महत्फलम् ।
शाकप्रदाता नरकं यमलोकं न पश्यति ॥
वर्जयेच्छ्रावणे शाकं दधि भाद्रपदे त्यजेत् ।
क्षीरमाश्वयुजे मासि कार्तिके (१)द्विदलं त्यजेत ॥

( च ) विष्णुधर्मोत्तरे—

नदीतीरेषु सन्तार्य पान्थान्पथि तथा नरः ।
शीघ्रं तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥
सर्वपोतं तथा नावं यः करोति नदीतटे ।
अश्वमेधफलं तस्य नरः प्राप्नोति कर्म्मणः ॥

अन्न का दान बढ़ा हुआ है। चातुर्मासे में अन्न, जल, गाय का दान, वेदपाठ और अग्नि में होम करने का महाफल है, इसमें दूध, दही और माठे का दान भी महा फलदायक है; शाकदान करने वाला पुरुष नरक या यमलोक को नहीं देखता है। व्रती-श्रावण में शाक, भादोमें दही, आश्विन (कुआर) में दूध और कार्तिक में दाल—[ स्कन्दपुराणोक्त–उडद, मूंग, मसूर, चना, कुलथी, मटर, बोड़ा और अरहर ] का त्याग करे। (च) विष्णु-धर्मोत्तर–रास्ते में नदीतीर पर पथिकों को पार उतरवा कर मनुष्य शीघ्र ही दुर्गमस्थान और क्षुरधार नामके नरक तथा पर्वत को पार करता है। जो मनुष्य नदी तटपर सभी प्रकार के छोटे छोटे

( १ ) स्कान्दे—माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः ।
निष्पावा राजमाषाश्च आढको द्विदलं स्मृतम् ॥

( छ ) गारुडे—

वर्षायामुष्णलतमे हेमन्ते शिशिरेषु च ।
ग्रीष्मे च शीतलतले पान्थं विश्राम्य नाकभाक् ॥
दत्वा वासो विवस्त्राय रोगिणो रुक्प्रतिक्रियाम् ।
तृषार्त्ताय जलं स्वादु मृष्टमन्नं बुभुक्षवे ॥

( ज ) भविष्योत्तरे—

सन्ध्यायां पथिकः कश्चित्समागच्छति भारत ।
पादशौचासनैः प्रह्वः स्वागतोक्त्या च पूजयेत् ।
ततश्चान्नप्रदानेन शयनेन च पार्थिव ॥
दिवाऽतिथौ तु विमुखे यदेकं पातकं भवेत् ।
तदेवाष्टगुणं पुंसः सूर्ये हंसमुखे गते ॥

---

जल-यान और बड़ी नाव का प्रबन्ध करता है, वह उस कार्यसे अश्वमेध यज्ञ किये का फल पाता है। (छ) गरुडपुराण-पथिकों को वर्षा, हेमन्त और शिशिरऋतु में गरम स्थान तथा ग्रीष्मऋतु में ठंढे स्थान देकर मनुष्य स्वर्ग को प्राप्त करता है। यदि वह पथिक बिना वस्त्र के हो तो वस्त्र, रोगी हो तो औषध, प्यासा हो तो जल और भूखा हो तो उसे स्वादिष्ठ अन्न देकर दाता परमसुख पाता है। ( ज ) भविष्योत्तर-हे युधिष्ठिर ! सन्ध्याकाल में यदि कोई पथिक आ जाय तो नम्र होकर पदप्रक्षालन, आसन और स्वागत वचन से उसे पूजित करे। इसके बाद, हे राजन् ! उसे अन्न और सोने के लिये खट्वा आदि देकर सत्कृत करे। दिन में अतिथि को विमुख लौट जाने पर पुरुषको जो पातक होता है, उसके आठगुणा के बराबर सायंकाल में लौट जानेसे होता है।

( झ ) हारीतः—

एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते ॥

( ञ ) बृहत्पाराशरीये—

अदृष्टोऽश्रुतपूर्वादिरज्ञानाचारविद्यकः ।
चातुर्वर्ण्योऽतिथिः प्रोक्तः कालप्राप्तेऽध्वगोऽश्रुतः ॥

( ट ) आह्निककारिकायाम्—

ब्रह्मचारी यतिश्चैव (१)विद्यार्थी गुरुपोषकः ।
दुर्भगः क्षीणवित्तश्च षडेते भिक्षुकाः स्मृताः ॥

( ठ ) विष्णुप्रोक्ते—

उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् ।
आयुष्माञ्जायते तेन कर्मणा मानवो भुवि ॥

( झ ) हारीत–एक रात्रि निवास करता हुआ ब्राह्मण अतिथि कहा गया है, क्यों कि जिसका निवास अधिक दिन के लिये न हो, वही अतिथि कहा जाता है। ( ञ ) बृहत्पराशर–जो पहले न देखा गया और न सुना गया हो, एवं जिसकी विद्या तथा आचार का भी पता न हो, ऐसा चारो वर्णों का पुरुष अतिथि है, जो उत्सवादि विशेष दिवसोंमें अकस्मात् आ जावे, वह अध्वग अर्थात् अभ्यागत कहा जाता है। ( ट ) आह्निककारिका–ब्रह्मचारी, संन्यासी, विद्यार्थी, भिक्षा आदि के द्वारा गुरु को पोषण करने वाला, दुःखी और जिसका धन आदि नष्ट होगया हो ( दरिद्र ), ये छ भिक्षुक कहे जाते हैं। ( ठ ) विष्णुप्रोक्त–उपाकर्म के दिन

( १ ) स्नानानन्तरमपि विद्यापरायणः ।

( ड ) अत्रिः—

यज्ञोपवीतं यो दद्याच्छ्वेतवर्णं सुशोभनम् ।
यथाशक्त्या विधानेन अग्निष्टोमफलं लभेत् ॥

इति श्रावणमासदानम् ।

**अथ कर्के श्रावणे मासि तीर्थम् ।**

( ढ ) वायुपुराणे—

गङ्गायां कर्कटे तथा, इति दिक् ।

---

**( क ) अथ पञ्चमे सिंहे भाद्रपदे मासि प्रत्यहं मिष्ट(१)पायसं मधु च दद्यात् ।**

तत्र सङ्कल्पः—

देशकालौ स्मृत्वा, गोत्रः शर्म्मा—श्रुतिस्मृतिपुराणोक्तफ-

---

ब्राह्मणों को यज्ञोपवीत देवे, इस कार्यसे वह पृथ्वी पर आयुष्मान् होता है । ( ड ) अत्रि—जो यथाशक्ति विधि विधान से श्वेतवर्ण का सुन्दर यज्ञोपवीत देता है, वह अग्निष्टोमयज्ञ के फल को पाता है । इति श्रावणमास दान ।

कर्क के सूर्य या श्रावण में तीर्थ ।

(ढ) वायुपुराण—कर्क की संक्रान्ति में गंगा का स्नान सर्वश्रेष्ठ है । इति श्रावणमास तीर्थ ।

(क) पांचवें सिंह की संक्रान्ति या भाद्रमास में प्रति-

---

( १ ) शास्त्रे धान्यानुक्तत्वात्पायसे वेदोक्ताः श्यामाका ग्राह्याः । श्यामाकाः—सांवा इति नाम्ना ख्याताः । लोके श्यामाकक्षीरशर्कराऽन्वितं पायसं प्रचलितमस्ति, पितृश्राद्धादिषु ।

लप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिदं मिष्टपायसं प्रजापति-दैवत्यं दक्षिणायुतं मधु च विष्णुदैवत्यममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम, इति ।

पायसदानमन्त्रः—

पायसं शर्करायुक्तं सघृतं कांस्यभाजने ।
प्रदानान्मे फलं चास्तु ऐहिकामुष्मिकं च यत् ॥

पृथक्कृते सति क्षीरं, शर्करा, श्यामाको, घृतं च पृथक्पृथक् प्राप्तं, तत्र घृतस्याश्विने मासि मन्त्रो वक्ष्यते ।

क्षीरस्य दानमन्त्रस्तु—

अलक्ष्मीहरणं चैव सौभाग्यबलवर्द्धनम् ।
क्षीरं मङ्गल्यमायुष्यमतः शान्तिं प्रयच्छ मे ॥

शर्करायाः—

अमृतस्य कुलोत्पन्ना इक्षवोऽप्यथ शर्कराः ।
सूर्यप्रीतिकरा नित्यमतः शान्तिं प्रयच्छ मे ॥

श्यामाकस्य—

श्यामाकास्तु सदा पुण्याः पवित्रा यज्ञसाधनाः ।
अतस्तेषां प्रदानेन पावको वरदः सदा ॥

मधुदानमन्त्रः—

यस्मात्पितॄणां श्राद्धेषु पीतं मध्वमृतोद्भवम् ।
सदा तस्य प्रदानेन मोक्षः स्याद् दुःखसागरात् ॥

---

दिन वेदोक्त साँवेका मीठा खीर और शहद उपरोक्त संकल्प और मन्त्र पढ़कर देना चाहिये ।

( ख ) विशेषतः प्रौष्ठपद्यां शक्तौ सकलमासि वा छत्रं दद्यात् ।

तत्र सङ्कल्पः—

इदं छत्रमङ्गिरोदैवत्यममुकगोत्रायेत्यादिरूह्यः ।

दानमन्त्रस्तु—

इहामुत्र परित्राणं कुरु मे केशव प्रभो ।
छत्रं त्वत्प्रीतये दत्तं ब्राह्मणाय मया शुभम् ॥

अथ मूलवचनानि ।

( ग ) वामनपुराणे—

मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषी ।
हृषीकेशप्रीणनार्थं लवणं च गुडं दधि ॥

( घ ) हेमाद्रौ, विश्वामित्रः—

ससुवर्णं छत्रदानं सिंहेऽपि विहितं सदा ।

इति भाद्रपदमासदानम् ।

---

(ख) विशेष करके भादो की पूर्णिमा या सामर्थ्य युक्त होने से संपूर्ण भादो मास भर छाते के दानसे महा-पुण्य होता है, अतः उपरोक्त संकल्प और मंत्र पढ़कर छाते का दान करे ।

मूलवचन ।

(ग) वामनपुराण—भादो के महीने में विष्णु की प्रसन्नता के लिये—खीर, शहद, घृत, नमक, गुड़ और दही का दान करे । (घ) हेमाद्रि में विश्वामित्र—सिंह की संक्रान्ति में सब दिन सोने के सहित छाते का दान देवे । इति भाद्रमास दान ।

## अथ सिंहे भाद्रपदे मासि तीर्थम् ।

( ङ ) देवीपुराणे—

भाद्रमासे च गण्डकी, इति दिक् ।

( क ) अथ षष्ठे कन्यायामाश्विने मासि प्रत्यहं तिलान् घृतं च दद्यात् ।

तत्र सङ्कल्पः—

देशकालौ सङ्कीर्त्य, गोत्रः शर्म्मा—श्रुतिस्मृतिपुराणोक्त-फलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमान् तिलान् विष्णु-दैवत्यान् सदक्षिणान् घृतं चामुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम, इति ।

तिलदानमन्त्रः—

तिलाः पापहरा नित्यं विष्णुदेहसमुद्भवाः ।
तस्मादेषां प्रदानेन पापनाशनमुच्यते ॥

घृतदानमन्त्रः—

कामधेनोः समुद्भूतं देवानामुत्तमं हविः ।
आयुर्विवर्द्धनं दातुराज्यं कुर्यात्सदा मम ॥

---

### सिंह के सूर्य या भादों में तीर्थ ।

(ङ) देवीपुराण—भाद्रमास में गंडकी नदी ( नारायणी ) का स्नान सर्वोत्तम है। इति भाद्रमास तीर्थ ।

( क ) छठें कन्या के सूर्य या आश्विन ( कुआर ) में प्रतिदिन तिल और घृत का दान उपरोक्त संकल्प और मन्त्र पढ़कर करे ।

( ख ) विशेषत आश्विन्यां शक्तौ सकलमासि वा ज्वरादिरोगाधिक्याद् रोगार्त्तेभ्य आरोग्यार्थ-मौषधादिकं ( अशक्तौ षोडशदिनेषु(१)यमदंष्ट्रा-ऽऽख्येषु ) दद्यात् ।

तत्र सङ्कल्पः—

धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वर-प्रीत्यर्थमिदमौषधं ( तन्निष्क्रयीभूतं द्रव्यं वा ) आरोग्यतास-म्पादनार्थममुकनाम्ने रोगिणे दातुमहमुत्सृज्ये न मम, इति ।

औषधदानमन्त्रः—

धर्मार्थकाममोक्षाणामारोग्यं मूलकारणम् ।
अतो भैषज्यदानेन भवेत्प्रीतश्चतुर्भुजः ॥

अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ।

---

( ख ) विशेष करके आश्विन की पूर्णिमा या संपन्न होने से संपूर्ण आश्विनमास भर ज्वरादि रोग की अधि-कता होने के कारण आरोग्यार्थ रोगियों को औषध देवे, असमर्थ हो तो यमदंष्ट्रा-[ आश्विन के अन्तिम आठ दिन और कार्तिक के आरम्भ के आठ दिन अर्थात् सोलहदिना-त्मक ] में उपरोक्त सङ्कल्प और मन्त्र पढ़कर देवे ।

मूलवचन ।

( ग ) हेमाद्रि में विश्वामित्र—कन्या की संक्रान्ति में वस्त्र

---

(१) कार्तिकस्य दिनान्यष्टावष्टावाश्वयुजस्य च । यमदंष्ट्रेति विख्यातेति ।

( घ ) वामनपुराणे—

तिलास्तुरङ्गवृषभं दधि ताम्रायसादिकम् ।
प्रीत्यर्थं पद्मनाभस्य दद्यादाश्वयुजे नरः ॥

( ङ ) विष्णुधर्म्मोत्तरे--

आश्विने घृतदानेन रूपवानभिजायते ।

( च ) विष्णुः---

आश्विनं सकलं मासं विप्रेभ्यः प्रत्यहं घृतम् ।

( छ ) विश्वामित्रः--

औषधं पथ्यमाहारं तैलाभ्यङ्गप्रतिश्रयम् ।
यः प्रयच्छति रोगिभ्यः स भवेद् व्याधिवर्जितः ॥

( ज ) नन्दिपुराणे--

धर्मार्थकाममोक्षाणामारोग्यं साधनैर्युतम् ।
अतस्त्वारोग्यदानेन भवेदारोग्यवान्नरः ॥

---

और गाय का दान उत्तम है। ( घ ) वामनपुराण–दाता आश्विन में विष्णुकी प्रसन्नता के लिये तिल, घोड़ा, बैल, दही और तांबे–लोहे की बनी हुई वस्तु का दान करे। (ङ) विष्णुधर्मोत्तर–आश्विन में घृतदान से सौन्दर्यवान् होता है। (च) विष्णु–संपूर्ण आश्विनमास में प्रतिदिन ब्राह्मणों को घृत देवे। (छ) विश्वामित्र-जो पुरुष–रोगियों को औषध, चिकित्सा में हितकारक पथ्य–आहार, तैल, उबटन और रहने के लिये स्थान देता है, वह नीरोगी होता है। (ज) नन्दिपुराण–धर्म, अर्थ, काम और मोक्ष का कारण आरोग्यता है, इसलिये सब साधनों से युत आरोग्य ( औषध ) दान करने से मनुष्य आरोग्यवान् होता है।

(झ) ब्रह्माण्डे—

आधयो व्याधयश्चैव शरीरपरिशोषिणः ।
पुण्यं तत्परिहारार्थं कर्त्तव्यं हितमिच्छया ॥

इत्याश्विनमासदानम् ।

**अथ कन्यायामाश्विने मासि तीर्थम् ।**

(ञ) देवीपुराणे—

आश्विने सरयूश्चैव, इति दिक् ।

---

**(क) अथ सप्तमे तुलायां कार्तिके मासि प्रत्यहं (१)चणकान् (२)गोग्रासादिकं च दद्यात् ।**

---

(झ) ब्रह्माण्डपुराण—मानसिक और दैहिक रोग शरीर को सुखाने वाले हैं, इसलिये उनके परिहार के लिये कल्याण की इच्छा से मनुष्य को पुण्य करना चाहिये । इति आश्विनमास दान ।

**कन्या राशि के सूर्य या कार्तिक में तीर्थ ।**

(ञ) देवीपुराण–आश्विनमास में सरयूनदी का स्नान उत्तम है । इति कार्तिकमास तीर्थ ।

**(क) सातवें तुला की संक्रान्ति या कार्तिकमास में**

---

(१) मूलवचनेषूद्धृतविश्वामित्रोक्तवचसि–‘धान्यानां बीजानाम्’ इत्यत्र धान्यविशेषस्यानुपलम्भाद् वेदोक्ता खल्वा ग्राह्याः । खल्वाः–चणका इति वेदभाष्यम् ।

(२) कार्तिके गोपरिचर्याया फलाधिक्यम्, दानसंग्रहे–दीपदानं गोपरिचर्याचेत्युक्तत्वात् । तत्र–“रजतं कनकं दीपान्मणिमुक्ताफलादिकम् ।” इत्यादि वामनपुराणोक्तवचनात्, “तुलायां तिलतैलेन” इत्यादि पुष्करपुराणो-

तत्र सङ्कल्पः—

देशकालौ स्मृत्वा, गोत्रः शर्म्मा—श्रुतिस्मृतिपुराणोक्त-फलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमान् चणकान् विष्णुदैवत्यान्सदक्षिणानमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तथा गोभ्यो गोग्रासादिकं च तुभ्यमहं संप्रददे न मम, इति।

चणकदानमन्त्रः—

पुरा गोवर्द्धनोद्धारसमये कृष्णभक्षिताः।
चणकाः सर्वपापघ्ना अतः शान्ति प्रयच्छ मे॥

गोग्रासदानमन्त्रस्तु—

सुरभि त्वं जगन्मातर्नित्यं विष्णुपदे स्थिता।
सर्वदेवमयं ग्रासं मया दत्तमिमं ग्रस॥

प्रार्थना—

सर्वदेवमये देवि सर्वदेवैरलङ्कृते।
मातर्ममाभिलषितं सफलं कुरु नन्दिनि॥

(ख) विशेषतो दीपावल्यां कार्तिक्यां च शक्तौ सकलमासि वा दीपं दद्यात्।

---

प्रतिदिन वेदोक्त चना और गौ के लिये गोग्रासादि उपरोक्त संकल्पादि पढकर देवै।

( ख ) विशेष करके दीपावली अमावास्या और का-

---

क्तवचनाच्च कार्तिके दीपदानं प्रतिदिनं प्राप्तम्। तत्साहचर्याद् गोग्रासादि-परिचर्याऽपि तथैव प्रत्यहं प्राप्ता। शास्त्रेषु गोपाष्टम्यादौ विहिता गोप-रिचर्या अशक्तावपि आवश्यिकेति बोधनार्थं तत्र तत्र विशेषवचनमिति दिक्।

तत्र सङ्कल्पः—

गोत्रः शर्म्मा—श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामनया श्री परमेश्वरप्रीत्यर्थं ( अमुकस्थाने ) दीपदानमहं करिष्ये, इति ।

दीपदानमन्त्रस्तु—

दीपो ज्ञानप्रदो नित्यं देवतानां प्रियः सदा ।
दानेनास्य भवेत्सौख्यं शान्तिर्मे वाञ्छितं फलम् ॥
सज्योतिस्तैलपात्रं च दीपं बाहुसमुन्नतम् ।
सुखं स्यादस्य दानेन शान्तिरस्तु सदा मम ॥
नमः पितृभ्यो प्रेतेभ्यो नमो धर्माय विष्णवे ।
नमो यमाय रुद्राय कान्तारपतये नमः ॥

अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

तुलाप्रवेशे धान्यानां बीजानां दानमुत्तमम् ।

( घ ) वामनपुराणे—

रजतं कनकं दीपान्मणिमुक्ताफलादिकम् ।

---

र्तिक की पूर्णिमा में या शक्ति हो तो यथेच्छ संपूर्ण कार्तिकमास भर दीपदान का महाफल है, अतः उपरोक्त संकल्प और मन्त्र पढकर दीपदान करे ।

मूलवचन ।

( ग ) हेमाद्रि में विश्वामित्र—तुला की संक्रान्ति में धान्यों तथा बीजों का दान उत्तम है । ( घ ) वामनपुराण—मनुष्य कार्तिक

प्रीत्यर्थं दामगर्भस्य प्रदद्यात्कार्तिके नरः ॥

( ङ ) वायुपुराणे—

दीपदः कार्तिके मासि माघे मासि च वस्त्रदः ।
वैशाखे चान्नदश्चापि नाप्नुवन्ति पुनर्जनिम् ॥

( च ) संवर्तः—

देवागारे द्विजागारे दीपं दद्याच्चतुष्पथे ।
मेधावी ज्ञानसम्पन्नश्चक्षुष्मांश्च भवेन्नरः ॥

( छ ) कूर्मपुराणे—

शुल्काष्टमी कार्तिके तु स्मृता गोपाष्टमी बुधैः ।
तत्र कुर्याद् गवां पूजां गोग्रासं गोप्रदक्षिणाम् ।
गवानुगमनं कार्यं सर्वान्कामानभीप्सता ॥

( ज ) ब्रह्मपुराणे—

पञ्चदश्याश्चतुर्दश्यां द्वादश्यामष्टमीषु च ।
उपचारो गवां कार्यो मासि मासि यथाक्रमम् ॥

---

में विष्णु के प्रीत्यर्थ चांदी, सोना, दीप, मणि, मोती और फलादि देवे । ( ङ ) वायुपुराण—कार्तिक में दीपदाता, माघ में वस्त्रदाता और वैशाख में अन्नदाता पुनर्जन्म नही लेता है। ( च ) संवर्त—देवमन्दिर ब्राह्मण के घर और चौहट्टेमें दीप देवे, इससे वह पुरुष अतिबुद्धिमान्, ज्ञानसम्पन्न और दिव्यदृष्टि वाला होता है । ( छ ) कूर्मपुराण—विद्वान् लोग कातिक शुक्ल अष्टमी को गोपाष्टमी कहते हैं, उसमें गोपूजा, गोग्रास और गोप्रदक्षिणा करे, सब कामनाओंकी प्राप्तिकी इच्छा से गौके पीछे चलना अर्थात् गोचारण करना चाहिये । ( ज ) ब्रह्मपुराण—प्रत्येक मास

( झ ) विष्णुः—

गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ।
गवां ग्रासप्रदानेन स्वर्गलोके महीयते ॥

( ञ ) भविष्ये—

गवां कण्डूयनं धन्यं गोप्रदानफलप्रदम् ।
तुल्यं गोशतदानस्य भयरोगादि पालनम् ॥

( ट ) आदित्यपुराणे—

लवणं च यथाशक्त्या गवां यो वै ददाति च ।
तेषां पुण्यकृतां लोकान् गवां लोकं व्रजन्ति ते ॥

( ठ ) महाभारते—

कृत्वा गवार्थे शरणं शीतवातक्षमं महत् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥

---

में, अमावास्या, पूर्णिमा, चतुर्दशी, द्वादशी और अष्टमी में गो सेवा करनी चाहिये। ( झ ) विष्णु–गाय के शरीर को खुजलाना सब पापों को नाश करने वाला है और गाय को ग्रास देनेसे स्वर्ग में पूजित होता ह। ( ञ ) भविष्यपुराण–गोकण्डूयन ( गाय को खुजलाना ) गोदान के फल को देने वाला, प्रशंसनीय और भय रोगादि में उसका पालन करना सैकड़ों गोदान के तुल्य है। ( ट ) आदित्यपुराण–जो मनुष्य यथाशक्ति गाय को नमक देते हैं, वे पुण्य करने वाले के लोक और गोलोक को प्राप्त करते हैं। ( ठ ) महाभारत–हे भरतसत्तम ! गौ के लिये शीतल वायु को रोकने में समर्थ गोशाला बनाने से वह पुरुष अपने सात कुल को

( ड ) ब्रह्मपुराणे—

गवां गोष्ठे स्थितानां तु यः करोति प्रदक्षिणाम् ।
प्रदक्षिणीकृतं तेन जगत् सदसदात्मकम् ॥

इति कार्तिकमासदानम् ।

**अथ तुलायां कार्तिक तीर्थम् ।**

( ढ ) वायुपुराणे—

तुलास्नानं तु कावेर्य्याम्, इति दिक् ॥

---

**( क ) अथाष्टमे वृश्चिके मार्गशीर्षे मासि प्रत्यहं (१)माषान् लवणं च दद्यात् ।**

**तत्र सङ्कल्पः—**

**देशकालौ स्मृत्वा, गोत्रः शर्म्मा—श्रुतिस्मृतिपुराणोक्तफलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमान्माषान् विष्णुदैवत्यान् दक्षिणायुतान् लवणं च सौम्यदैवत्यममुकगोत्रायामु-**

---

तार देता है। ( ड ) ब्रह्मपुराण—एकत्र बैठी हुई गौओं की जो प्रदक्षिणा करता है, मानो उसने सत् असत् रूप जगत् की प्रदक्षिणा की। इति कार्तिकमास दान।

**तुलाकी संक्रान्ति या कार्तिक में तीर्थ ।**

( ढ ) वायुपुराण—तुलाराशि के सूर्य में कावेरी नदी का स्नान श्रेष्ठ है। इति कातकमास तीर्थ।

( क ) आठवं वृश्चिक के सूर्य या अगहन महीने में

---

( १ ) शास्त्रेऽन्नविशेषस्यादर्शनाद् वेदोक्ता माषा ग्राह्याः ।

कशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम, इति ।

मापदानमन्त्रः—

यस्मान्मधुवधे काले विष्णुदेहसमुद्भवाः ।
पितॄणां तृप्तिदा माषा अतः शान्तिं प्रयच्छ मे ॥

लवणदानमन्त्रः—

लवणे वै रसाः सर्वे लवणे सर्वदेवताः ।
लवणस्तु हरेत्पापमतः शान्तिं प्रयच्छ मे ॥

**( ख ) विशेषतो मार्गशीर्ष्यां शक्तौ सकलमासि वा कार्पासिकं वस्त्रं दद्यात ।**

तत्र सङ्कल्पः—

इदं कार्पासिकं वस्त्रं बृहस्पतिदैवत्यं सदक्षिणाकममुक-गोत्रायेत्यादिरवसेयः ।

वस्त्रदानमन्त्रः—

शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् ।
देहालङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे ॥

---

प्रतिदिन वेदोक्त उड़द तथा नमक, उपरोक्त संकल्प और मन्त्र पढकर देवे ।

( ख ) विशेष करके अगहन की पूर्णिमा या समर्थ हो तो यथेच्छ सम्पूर्ण अगहन महीने भर सूती कपड़ेके दान से महाफल है, अतः उपरोक्त संकल्प और मन्त्र पढकर सूती वस्त्र देना चाहिये ।

## अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

कीटप्रवेशे वस्त्राणां वेश्मनां दानमुत्तमम् ॥

( घ ) विष्णुधर्मोत्तरे-

दत्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते ।

तथा—

वस्त्रदानं पवित्रं तु पितॄणामपि तारणम् ।

( ङ ) स्कान्दे—

सहोमासे तु पूर्णायां सद्मदानं तु कारयेत् ।
स्वर्णदानं च गोदानमन्नदानं च पुत्रक ॥
धरादानं प्रकर्तव्यं पूर्णायां विधिपूर्वकम् ।
मार्गशीर्षेण संयुक्ता पूर्णाऽनन्तफलप्रदा ॥

( च ) विष्णुधर्मोत्तरे—

लवणं मार्गशीर्षे तु दत्वा सौभाग्यमश्नुते ।

इति मार्गशीर्षमासदानम् ।

---

## मूलवचन ।

( ग ) हेमाद्रि में विश्वामित्र–वृश्चिकराशि के सूर्यमें वस्त्र और घरका दान उत्तम है । ( घ ) विष्णुधर्मोत्तर–दाता सूती कपड़े देकर स्वर्ग में पूजित होता है । वैसे ही–वस्त्र का दान पवित्र तथा पितरों को भी तारने वाला है । ( ङ ) स्कन्दपुराण–हे पुत्र ! अगहनकी पूर्णिमा में गृहदान, सुवर्णदान, गोदान और अन्नदान करे और इस पूर्णिमामें विधिपूर्वक पृथ्वीका दान करना चाहिये, मार्गशीर्ष की पूर्णिमा अनन्तफल देने वाली है । ( च ) विष्णु-

## अथ वृश्चिके मार्गशीर्षे मासि तीर्थे ।

( छ ) स्कान्दे—

यादृशी मथुरा पुत्र सहोमासे मम प्रिया ।
न तथा तीर्थराजाद्यास्तदभावे तु पुष्करम् ॥ इति दिक् ।

---

## ( क ) अथ नवमे धनुषि पौषे मासि प्रत्यहं (१)नीवारं गुडं च दद्यात् ।

तत्र सङ्कल्पः—

देशकालौ सङ्कीर्त्य, गोत्रः शर्म्मा–श्रुतिस्मृतिपुराणोक्त-फलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमं नीवारं प्रजापति-दैवत्यं सदक्षिणाकं गुडं च सौम्यदैवत्यममुकगोत्रायामुकश-र्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम, इति ।

---

धर्मोत्तर—अगहन में नमक का दान करने से सौभाग्य प्राप्त होता है । इति मार्गशीर्षमास दान ।

### वृश्चिकके सूर्य या अगहनमें तीर्थ ।

( छ ) स्कन्दपुराण–हे पुत्र ! अगहनमें जैसी मथुरा हमारी प्रिय है, वैसा प्रयागादि तीर्थ प्रिय नही है और मथुराके अभाव में पुष्करतीर्थ को प्रिय जानो । इति मार्गशीर्षमास तीर्थ ।

( क ) नवें धन की संक्रान्ति या पूसमें प्रतिदिन वेदोक्त

---

( १ ) शास्त्रे धान्यविशेषस्यानुक्तत्वाद् वेदोक्ता नीवारा ग्राह्याः । नीवारः—'तिनी' इति नाम्ना प्रसिद्धः । तृणधान्यानि नीवारा, इत्यमरः ।

दानमन्त्रः—

धान्यं करोति दातारमिह लोके परत्र च ।
तस्मादस्य प्रदानेन मम सन्तु मनोरथाः ॥

गुडदानमन्त्रः—

प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षु रसो मतः ।
मम तस्मात्परां शान्तिं ददस्व गुड सर्वदा ॥

( ख ) विशेषतः पौष्यां शक्तौ सकलमासि वा कम्बलमूर्णवस्त्रं वा दद्यात् ।

तत्र सङ्कल्पः—

इदं कम्बलमूर्णावस्त्रं वा श्रीविष्णुप्रीतिकामोऽमुकगोत्रायेत्यादिर्बोध्यः ।

कम्बलदानमन्त्रस्तु—

शीतवर्षाहरः पुण्यो हृष्टो बलविवर्द्धनः ।
कम्बलस्य प्रदानेन शान्तिरस्तु सदा मम ॥

ऊर्णावस्त्रदानमन्त्र—

ऊर्णावस्त्रं चारु चित्रं देवानां प्रीतिवर्द्धनम् ।
सुखस्पर्शकरं यस्मादतः शान्तिं प्रयच्छ मे ॥

---

नीवार ( तिनी ) तथा गुड उपरोक्त संकल्प और मन्त्र पढ़कर देवे ।

( ख ) विशेष करके पूस की पूर्णिमा या शक्ति होने पर यथेच्छ सम्पूर्ण पूस महीने भर कम्बल और ऊनीवस्त्र

अथ मूलवचनानि ।

( ग ) हेमाद्रौ,विश्वामित्रः--

धनुःप्रवेशे वस्त्राणां यानानां च महत्फलम् ।

( घ ) स्कान्दे--

पौषे मासे तु सम्प्राप्ते गोदानानि च कारयेत् ।
वस्त्रदानं तथा कार्यं धान्यदानं तथैव च ॥
लवणस्य तथा दानं गुडदानं तथैव च ।
विशेषतो रौप्यदानमाज्यदानं विशेषतः ॥
नारिकेलं मातुलुङ्गं कूष्माण्डं तु तथैव च ।
कम्बलः पट्टगर्भश्चेन्महाशीतविनाशकः ।

तथा–

स एव विपरीतश्चेन्महावृष्टिविनाशकः ॥

इति पौषमासदानम्

---

के दान का महाफल है, अतः उपरोक्त सङ्कल्प और मन्त्र पढ़कर कम्बल अथवा ऊनीवस्त्र देना चाहिये ।

मूलवचन ।

( ग ) हेमाद्रि में विश्वामित्र–धनके सूर्य में कपड़े और सवारियों के दान का महाफल है । ( घ ) स्कन्दपुराण–पूसमास में गोदान, वस्त्रदान, धान्यदान, लवण ( नमक ) दान और गुड-दान करे, विशेष करके, चांदी, घृत, नारियल, विजौरा नीबू और भूरे कोंहड़े का दान करना चाहिये । वैसे ही–यदि कम्बल पट्टगर्भ अर्थात् जिस कम्बल के भीतर रेशम हो तो वह घोर शीत का

## अथ धनुषि पौषे मासि तीर्थम् ।

( ङ ) स्कान्दे--

वसुराशौ तु सम्प्राप्ते श्रीसूर्ये शृणु शौनक ।
कुरुक्षेत्रे प्रयागे च तथा गोदावरीतटे ॥
दीपदानं प्रकर्तव्यं गोविन्दः प्रीयतामिति ।
कोटियज्ञेन यत्पुण्यं तत्पुण्यं समवाप्यते ॥
पुरुषाद्दीपविच्छित्तिः कूष्माण्डच्छेदनं स्त्रियाः ।
अचिरेणैव कालेन वंशच्छेदो भवेद्ध्रुवम् ॥ इति दिक् ।

---

## ( क ) अथ दशमे मकरे माघे मासि प्रत्यहं (१)

---

नाश करने वाला है और इसके विपरीत हो तो अतिवृष्टि का नाशक होता है । इति पौषमास दान ।

## धनकी संक्रान्ति या पूसमें तीर्थ ।

( ङ ) स्कन्दपुराण-हे शौनक ! सुनो, धनराशि के सूर्यमें कुरुक्षेत्र, प्रयाग और गोदावरीतट पर-'विष्णु प्रसन्न हों' इस वाक्य को कहकर दीपदान करना चाहिये, इससे करोड़ों यज्ञ करने से जो पुण्य होता है, उसे वह पुण्य मिल जाता है । पुरुष द्वारा दीप को बुताने और स्त्री द्वारा कोंहड़े को काटने से, थोड़े ही समय में निश्चय करके उनके वंश का नाश होता है । इति पौषमास तीर्थ ।

## ( क ) दशवें मकर की संक्रान्ति या माघमें प्रतिदिन

---

( १ ) तण्डुलमुद्गसहितमिति दानसङ्ग्रहोक्तम् । अन्यत्र तु—"तिल-तण्डुलसंमिश्रः कृसरः सोऽभिधीयते ।" इति ।

कृसरं (१)सोपस्करं (२)सलड्डुकं ताम्बूलं च दद्यात् ।

तत्र सङ्कल्पः—

देशकालौ सङ्कीर्त्य, गोत्रः शर्म्मा—श्रुतिस्मृतिपुराणोक्त-फलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमं कृसरं सलड्डुकं विष्णुदैवत्यं सदक्षिणं ताम्बूलं च वनस्पतिदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम, इति ।

कृसरलड्डुकदानमन्त्रौ तु—

कृसरं सर्वशीतघ्नं शनिप्रीतिकरं सदा ।
तस्मादस्य प्रदानेन मम सन्तु मनोरथाः ॥
सतिलं गुडसंयुक्तं रसप्रीतिकरं नृणाम् ।
वर्द्धितं संगृहाणेदमतः शान्तिं प्रयच्छ मे ॥

पृथक्कृते सति तण्डुलौ मुद्गश्च पृथक्पृथक् प्राप्नोति तयोर्मन्त्रौ यथा, तण्डुलस्य—

पावनाः सर्वयज्ञेषु प्रशस्ता होमकर्मणि ।
तण्डुलानां प्रदानेन प्रीयतामग्निदेवता ॥

मुद्गस्य—

मुद्गधान्यं प्रियं चैव मनुष्याणां च नित्यशः ।
तस्मादेषां प्रदानेन शान्तिः स्वस्त्ययनं मम ॥

घृत—नमक-हलदी—सहित और तिल गुड़ से बने लड्डू के

(१) घृतलवणहरिद्राद्युपस्करमितिदानसङ्ग्रहः ।
(२) तिलगुडनिर्मितलड्डुकसहितमिति दानसङ्ग्रहः ।

ताम्बूलदानमन्त्रः—

सोपस्करं च ताम्बूलं सर्वदा मङ्गलप्रदम् ।

प्रियं चैव तु देवानां सौगन्ध्यं वदनेऽस्तु मे ।

( ख ) विशेषतो दर्शे माघ्यां शक्तौ सकल-मासि वा अग्नीन्धनं दद्यात् ।

तत्र सङ्कल्पः—

गोत्रः शर्म्मा-स्वर्गादिफलप्राप्तिकामनया इदमग्नीन्धनं दातुमहमुत्सृज्ये, इति ।

इन्धनदानमन्त्रः—

सोमोद्भवानि दारूणि जातवेदःप्रियाणि च ।

तस्मादेषां प्रदानेन श्रियं देहि विभावसो ॥

अथ मूलवचनानि ।

( ग ) दानसङ्ग्रहे—

तिल(१)धेनुः प्रदातव्या माघे मकरगे रवौ ।

---

साथ खिचड़ी तथा पान उपरोक्त संकल्प एवं मन्त्र पढकर देवैं।

( ख ) विशेष करके माघ की अमावास्या, पूर्णिमा, या समर्थ होने पर सम्पूर्ण माघमास भर अग्नि और लकड़ी के दान से महाफल होता है, अतः उपरोक्त संकल्प एवं मन्त्र पढकर अग्नि तथा लकड़ी का दान करे ।

मूलवचन ।

( ग ) दानसंग्रह–माघ में मकरराशि के सूर्य में तिलधेनु

---

( १ ) तिलधेनुविधिर्हेमाद्रौ द्रष्टव्यः ।

कृसरान्नं ब्राह्मणेभ्यो दद्यात्स्वर्गार्थिभि(१)र्नरैः ॥

( घ ) यमः--

कृसरं भोजयित्वा तु स्वशक्त्या शिशिरे द्विजान् ।
दीप्ताग्नित्वं समाप्नोति स्वर्गलोकं च गच्छति ॥

( ङ ) वायुपुराणे--

ताम्बूलं प्रत्यहं दद्यान्माघे मासे द्विजातये ।
सगुडं तिलपिष्टं च सोऽपमृत्युर्विमुच्यते ॥

( च ) हेमाद्रौ, विश्वामित्रः--

झषप्रवेशे दारूणां दानमग्नेस्तथैव च ।

( छ ) संवर्तः--

दद्याच्च शिशिरे वह्निं बहुकाष्ठं प्रयत्नतः ।
कायाग्निदीप्तिं प्रज्ञां च रूपसौभाग्यमाप्नुयात् ॥

---

देना चाहिये, स्वर्गार्थी–पुरुष ब्राह्मण को कृसरान्न ( खिचड़ी ) देवे। ( घ ) यम–अपनी शक्ति के अनुसार शिशिरऋतु में ब्राह्मणों को खिचड़ी खिलाकर तीव्र जठराग्नि को प्राप्त करता है और स्वर्गलोक में जाता है। ( ङ ) वायुपुराण–माघमास में प्रतिदिन ब्राह्मणों को पान और गुड़ के सहित तिलचूर्ण देवै, इससे अकालमृत्यु नही होती। ( च ) हेमाद्रि में विश्वामित्र–मकरकी संक्रान्तिमें लकड़ी और अग्नि का दान करे। ( छ ) संवर्त–शिशिरऋतु में अग्नि और अधिक लकड़ी यत्न करके देवै, इससे कायाग्नि ( जठराग्नि ) का दीपन, बुद्धि और रूप तथा

---

( १ ) दद्यादित्यत्र अन्तर्भावितण्यर्थः । तस्मात्तस्य दापयेदित्यर्थो बोध्यः । एवं च नररिति प्रयोज्यकर्तरि कर्तृकरणयोस्तृतीयेति तृतीया बोध्या ।

( ज ) दानसङ्ग्रहे--

मठे देवालयादौ च अग्नि प्रज्वालयेत्तु यः ।
तथा ज्वालयेद्वह्नि सेवनार्थं द्विजन्मनाम् ।
षष्ठिवर्षसहस्राणि स्वर्गलोके महीयते ।

इति माघमासदानम् ।

## अथ मकरे माघे मासि तीर्थानि ।

( झ ) वायुपुराणे--

माघस्नानं प्रयागे तु प्रशंसन्ति मनीषिणः ।
नद्यः समुद्रगाः सर्वास्तासु स्नानं प्रशस्यते ॥
गङ्गा विष्णुपदोद्भूता जाह्नवी भुवनेश्वरी ।
नित्यस्नाने त्वशक्तश्चेत्तत्कुर्याच्च दिनत्रये ॥

---

सौभाग्य प्राप्त होता है । ( ज ) दानसंग्रह-मठ में देवालयादि स्थानों में और ब्राह्मणों के सेवन ( तापने ) के लिये जो कोई अग्नि जलाता है, वह साठ हजार वर्ष तक स्वर्ग में पूजित होता है । इति माघमास दान ।

## मकर की संक्रान्ति या माघमें तीर्थ ।

( झ ) वायुपुराण-विद्वान लोग प्रयाग में माघस्नान की प्रशंसा करते हैं, समुद्र तक जाने वाली सभी नदियों में भी स्नान योग्य है । गङ्गा विष्णुके चरणसे निकलनेवाली जह्नुकी कन्या और भुवनेश्वरी देवी स्वरूपा हैं । नित्य दिन स्नान करने में यदि असमर्थ हो तो द्वादशी, रथसप्तमी और पूर्णिमा इन तीन दिनों में, अथवा केवल एक ही दिन पूर्णिमा में स्नान करे । माघ में मकर के सूर्य में सरयू महा पुण्यवाली हैं, उसमें स्नान

द्वादश्यां रथसप्तम्यां पौर्णमास्यां तथैव च ।
अथ वा पौर्णमास्यां वा माघस्नानं चरेद् बुधः ॥
सरयू तु महापुण्या माघे मकरगे रवौ ।
तस्यां स्नात्वा महापुण्यः काल्यं कर्म निवर्त्यते॥इति दिक्।

---

**( क ) अथैकादशे कुम्भे फाल्गुने मासि प्रत्यहं व्रीहिं गोभ्यस्तृणानि जलं च दद्यात् ।**

तत्र व्रीहिदानसङ्कल्पः--

देशकालौ सङ्कीर्त्य, गोत्रः शर्मा-श्रुतिस्मृतिपुराणोक्त-फलप्राप्तिकामनया श्रीपरमेश्वरप्रीत्यर्थमिमं व्रीहिं प्रजापति-दैवत्यं सदक्षिणममुकगोत्रायामुकशर्मणे ब्राह्मणाय गोभ्यो-जलतृणे च तुभ्यमहं संप्रददे न मम, इति ।

व्रीहिदानमन्त्रस्तु--

ब्राह्मणा निर्मिताः पूर्वं व्रीहयो यज्ञसाधनाः ।
अनेन व्रीहिदानेन मम सन्तु मनोरथाः ॥

गोभ्यो जलतृणदानमन्त्रः--

रस्यानि शाद्वलानीह तोययुक्तानि गोपतेः ।
प्रीतये तव दास्यामि गोभ्यः पापहरो भव ॥

---

करनेसे महापुण्य होता है और कलिकर्म निवृत्त हो जाता है। इति माघमास तीर्थं ।

( क ) ग्यारहवें कुम्भके सूर्य या फाल्गुनमास में प्रति

( ख ) विशेषतो फाल्गुन्यां शक्तौ सकलमासि वा आसनं शयनं वा ददयात् ।

तत्र सङ्कल्पः—

इदमासनं शयनं वा सुखस्पर्शं श्रीविष्णुप्रीतिकामोऽमुकगोत्रायेत्यादिर्ज्ञातव्यः ।

तत्रासनदानमन्त्रः—

यमाद्यष्टाङ्गयोगोक्तसिद्धासनविराजितम् ।
मया भावेन ते दत्तमासनं प्रतिगृह्यताम् ।

शयनदानमन्त्रस्तु—

शयनं सुखदं कान्तं केशवस्य प्रियं सदा ।
दानेनानेन सौभाग्यं सर्वदाऽस्तु गृहे मम ॥

अथ मूलवचनानि ।

( ग ) वायुपुराणे—

फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् ।
गोविन्दप्रीणनार्थाय दातव्यं विधिपूर्वकम् ॥

---

दिन व्रीहि ( धान ) और गौके लिये जल तृण उपरोक्त संकल्प तथा मन्त्र पढकर देवै ।

( ख ) विशेष करके फाल्गुन की पूर्णिमा या शक्ति होने मर यथेच्छ सम्पूर्ण फाल्गुनमास भर आसन और बिछावन उपरोक्त संकल्प और मन्त्र पढकर देवै ।

मूलवचन ।

( ग ) वायुपुराण—फाल्गुन में श्रीविष्णु की प्रसन्नता के लिये

( घ ) हेमाद्रौ, विश्वामित्रः--

कुम्भप्रवेशे दानं तु गवामम्बुतृणस्य च ।

( ङ ) बृहत्पाराशरीये—

शुभं शयनमास्तीर्य फाल्गुन्यां सद्द्विजातये ।

( च ) लिङ्गपुराणे-

आसनं शयनं चैव यो ददाति यशस्विने ।
समं सर्वेषु भूतेषु तस्य दुःखं न विद्यते ॥

इति फाल्गुनमासदानम् ।

## अथ कुम्भे फाल्गुने मासि तीर्थम् ।

( छ ) भविष्ये—

गयागदाधरप्रीत्यै फाल्गुनस्य गतस्मयः ।
फाल्गुने समनुप्राप्ते सर्वं ब्रह्ममयं पयः ॥

---

विधि पूर्वक व्रीहि ( धान ), गाय और काला मृगचर्म के सहित वस्त्र देना चाहिये । ( घ ) हेमाद्रि में विश्वामित्र–कुम्भके सूर्यमें गौओंके लिये जल और घासका दान करना चाहिये । ( ङ ) बृहत्पराशर–फाल्गुन की पूर्णिमामें योग्य ब्राह्मण को उत्तम बिछावन बिछा करके देवै । ( च ) लिङ्गपुराण–जो पुरुष यशस्वी ब्राह्मण को आसन और बिछावन देता है तथा सब जीवों पर समान वर्ताव रखता है, उसे दुःख नही होता है । इति फाल्गुनमास दान ।

### कुम्भराशि के सूर्य या फाल्गुन में तीर्थ ।

( छ ) भविष्यपुराण–गया गदाधर के प्रीत्यर्थ फाल्गुनमास लगने पर फाल्गुनमासका सम्पूर्ण जल विकार रहित तथा ब्रह्ममय

तप्तोदकाद्वरं शीतं शीतात्कूपोदकं वरम् ।
कूपाद्दशगुणा वापी वाप्या खातोदकं वरम् ॥
तस्मान्निर्झरजं प्राहुर्निर्झराच्च वरं सरः ।
सरसोऽपि नदी श्रेष्ठा चतुर्योजनगामिनी ॥
तस्याश्चापि वरं तीर्थं तस्मात्सागरगामिनी ।
तासां वरिष्ठा गङ्गा च तस्या फल्गुर्वरा स्मृता ॥
तस्मात्कलियुगे घोरे पातालं प्रतियास्यति । इति दिक् ।

---

( क ) अथ द्वादशे मीने चैत्रे मासि प्रत्यह गोधूमानाम्रफलानि च दद्यात् ।

तत्र सङ्कल्पः—

देशकालौ सङ्कीर्त्य, गोत्रः शर्म्मा-श्रुतिस्मृतिपुराणोक्त फलप्राप्तिकामनया श्रीविष्णुप्रीत्यर्थमिमान् गोधूमान् विष्णु-

---

हो जाता है । गर्मजलसे शीतलजल उत्तम है और शीतलजल से कूएं का जल उत्तम है, इसी तरह कूएंसे दशगुणा, बावली का, उससे छोटे छोटे तालों का और तालोंसे झरने का जल उत्तम कहा गया है । झरनेसे उत्तम तालाव, तालावसे भी चारयोजन [ बारह कोस ] बहने वाली नदी, नदीसे तीर्थ, तीर्थसे समुद्रगामिनी नदियां, उनसे श्रेष्ठ गङ्गा और गङ्गासे भी श्रेष्ठ फल्गुनदी है, इसलिये वह घोर कलियुग के आने पर पाताल को चली जायंगी । इति फाल्गुनमास तीर्थ ।

( क ) बारहवें मान की संक्रान्ति या चैत्र में प्रतिदिन

दैवत्यान् सदक्षिणान् आम्रफलानि च वनस्पतिदैवत्यान्यमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे न मम, इति।

गोधूमदानमन्त्रस्तु—

धान्यचूडामणेर्जम्बूद्वीपे गोधूमसम्भवः ।
गन्धर्वसौख्यतृप्तिः स्यादतः शान्तिं प्रयच्छ मे ॥

आम्रफलदानमन्त्रः—

मनोहराणि रम्याणि नित्यं स्वादुकराणि च ।
फलानां संप्रदानेन सन्ततिस्त्वमला भव ॥

( ख ) विशेषतश्चैत्र्यां शक्तौ सकलमासि वा जल(१)पात्रं भाण्डं वा दद्यात् ।

---

गेंहू और आम के फल उपरोक्त संकल्प एवं मन्त्र पढकर देवें।

( ख ) विशेष करके चैत्र की पूर्णिमा या सामर्थ्ययुक्त होने पर यथेच्छ संपूर्ण चैत्रमास भर जलपात्र वा वर्तन के

---

( १ ) पात्रं कांस्यं चेत्, सङ्कल्पे—कामाकामकृतपापनाशकाम इत्याद्यूह्यः । मन्त्रस्तु—यानि पापान्यनेकानि कामाकामकृतानि च । कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ आयसं पात्रं चेत्, सङ्कल्पे-लोभाज्ज्ञानाज्ञानकृतपापक्षयकाम इत्याद्यूह्यः । मन्त्रस्तु—ज्ञानाज्ञानकृतं पापं मया लोभात्कृतं चिरात् । लोहपात्रप्रदानेन मम शीघ्रं व्यपोहतु ॥ रौप्यं पात्रं चेत्, सङ्कल्पे—कन्यादूषणपरदाराभिमर्शनादिपापक्षयकाम इत्याद्यूह्यः । मन्त्रस्तु—कन्यादूषणतः पापं परदाराभिमर्शनात् । रौप्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ सौवर्णं पात्रं चेत्, सङ्कल्पे—जन्मान्तरसहस्रोत्थदुष्कृतनाशकाम इत्याद्यूह्यः । मन्त्रस्तु—जन्मान्तरसहस्रेषु यत्कृतं दुष्कृतं मया । तत्सर्वं नाशमायातु स्वर्णपात्रप्रदानतः ॥ इति दिक् ।

तत्र सङ्कल्पः—

इदं जलपात्रं भाण्डं वा वरुणदैवत्यममुकगोत्रायेत्यादिरूह्यः ।

पात्रभाण्डदानमन्त्रस्तु—

हिरण्यादीनि भाण्डानि पात्राणि मृन्मयानि च ।
गृहाणेमानि वै यस्माद् भास्करः प्रीयतां मम ॥

अथ मूलवचनानि ।

( ग ) हेमाद्रौ, विश्वामित्रः—

मीनप्रवेशे स्थानानि माल्यानि च ददाति यः ।

( घ ) दानसङ्ग्रहे—

अजाः पञ्च पयस्विन्यो दरिद्राय कुटुम्बिने ।
न जायते पुनरसौ जीवलोके कदाचन ॥

---

दान का महाफल है, अतः उपरोक्त संकल्प और मन्त्र पढ़कर जलपात्र वा वर्तन का दान करे । [ पात्र कांसे आदि धातुओं के हों तो टिप्पणी में कहे ] संकल्प एवं मन्त्र पढ़कर देवै ।

मूलवचन ।

( ग ) हेमाद्रि में विश्वामित्र–मीनकी संक्रान्ति में जो उत्तम स्थान और पुष्पादि की माला देता है, वह पुण्यवान् होता है । ( घ ) दानसंग्रह–जो दरिद्र और कुटुम्बवाले ब्राह्मणों को पांच दुधार बकरी देता है, वह कभी इस मृत्युलोक में फिर जन्म

( ङ ) भविष्ये—

चैत्रे देयं जलं चान्नं देया शय्या मनोरमा ।
गोधूमतुवरीदानं दानं दध्योदनस्य च ।
तथा श्रीफलदानं च दानं चूतफलस्य च ॥

( च ) दानसङ्ग्रहे—

सूक्ष्मवस्त्रं मञ्चकं च पानपात्रं कमण्डलुम् ।

( छ ) लिङ्गपुराणे—

ताम्रायसानां भाण्डानां दाता यक्षाधिपो भवेत् ।
लभते च परं स्थानं युज्यते च महाश्रिया ॥

( ज ) वायुपुराणे—

स्वर्णरूप्यमयं भाण्डं देवतार्थे ददाति यः ।
कुबेरलोकमासाद्य मोदते बहुवत्सरान् ॥

इति चैत्रमासदानम् ।

---

नहीं लेता है । ( ङ ) भविष्यपुराण-चैत्रमास में जल, अन्न, सुन्दर-पलंग, गेंहू, अरहर, दही-भात, बेल-फल और आम का फल देना चाहिये । ( च ) दानसंग्रह-महीन कपड़े, पलंग, जल-पात्र और कमंडलु का दान करे । ( छ ) लिङ्गपुराण-ताँबे लोहे के बने हुए भांड को देनेवाला यक्षाधिप [ कुबेर ] होता है और उत्तमस्थान तथा अतुलसम्पति से युक्त होता है । ( ज ) वायु-पुराण-जो देवताओंके लिये सोने चांदी का भांड देता है, वह कुबेरलोक को प्राप्त कर बहुत वर्ष तक आनन्दित होता है । इति चैत्रमास दान ।

## अथ मीने चैत्रे मासि तीर्थम् ।

( भ्ह ) भविष्योत्तरे——

अयोध्यानगरीमध्ये चैत्रे मासे विशेषतः ।
चैत्रे मासे तु सम्प्राप्ते स्नानार्थं सरयूनदी ॥ इति दिक् ।

---

## ( क ) अथ त्रयोदशे मलमासे पुरुषोत्तमे मासि प्रत्यहमपूपान् दद्यात् ।

तत्र सङ्कल्पः——

देशकालौ सङ्कीर्त्य गोत्रः शर्म्मा–स्थिरलक्ष्मीपुत्रपौत्रायुरारोग्यैश्वर्यप्राप्तिकामनया श्रीपुरुषोत्तमप्रीतये एतान् त्रयस्त्रिंशदपूपान् पुरुषोत्तमदैवत्यान् सदक्षिणान् अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम, इति ।

अपूपदानमन्त्रस्तु——

विष्णुरूपी सहस्रांशुः स पापप्रणाशनः ।
अपूपान्नप्रदानेन मम पापं व्यपोहतु ॥
आदित्यतेजसाऽभ्यक्तं जातिश्रेष्ठकरं परम् ।
तस्मादस्य प्रदानेन शान्तिरस्तु सदा मम ॥

---

## मीनके सूर्य या चैत्र में तीर्थ ।

( भ्ह ) भविष्योत्तर–चैत्रमास प्राप्त होने पर अयोध्यापुरी में स्नान के लिये सरयूनदी श्रेष्ठ है । इति चैत्रमास तीर्थ ।

( क ) तेरहवें मलमास अर्थात् पुरुषोत्तममास में प्रति-

## अथ मूलवचनानि ।

( ख ) हेमाद्रौ, पाद्मे—

अधिमासे तु सम्प्राप्ते गुडसर्पिर्युतानि च ।
चन्द्रवद्वर्तुलान्यङ्ग व्रीहिपिष्टकृतानि च ॥
साज्यानि दधिमिश्राणि अधिमासे नृपोत्तम ।
त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने ॥
मलिम्लुचसमो मासो न तिथिर्द्वादशी समा ।
नान्नदानसमं दानं न देवः पुरुषोत्तमात् ॥
माघस्नानसहस्रैस्तु प्रयागे यत्फलं भवेत् ।
तत्फलं लभते देवि द्वादश्यां च मलिम्लुचे ॥
मलिम्लुचे सिते पक्षे द्वादश्यामन्नदस्य च ।
किं तस्य तीर्थैस्तपसा सुपुण्यैर्वा किमध्वरैः ॥

---

दिन उपरोक्त संकल्प और मन्त्र पढ़कर अपूप ( पूए ) का दान करना चाहिये ।

## मूलवचन ।

(ख)हेमाद्रि में पद्मपुराण–हे राजन् ! मलमास प्राप्त होने पर गुड घृत मिले और चावल आदि के आंटा से बने चन्द्रमा की तरह गोल घृत दही के सहित तेंतिस पूए प्रतिदिन ब्राह्मणों को देवै । मलमास के समान मास, द्वादशी तिथि के समान तिथि, अन्नदान के समान दान और विष्णुके समान देवता नही हैं । हे देवि ! प्रयागमें हजारों बार माघस्नान करने से जो फल होता है, वह मलमास की द्वादशी तिथि में दानादि

अधिमासे तु सम्प्राप्ते द्वादश्यां पूर्णिमातिथौ ।
व्यतीपातदिने वाऽपि किञ्चिद्दानान्महत्फलम् ॥

इति पुरुषोत्तममासदानम् ।

---

## अथ दानात्मकव्रतानि ।

( क ) भविष्योत्तरे—

चैत्रादिचतुरो मासाञ्जलं कुर्यादयाचितम् ।
ज्येष्ठाषाढे च वा मासं पक्षं वा पाण्डुनन्दन ॥
व्रतान्ते मणिकं दद्यादन्नवस्त्रसमन्वितम् ।
घृतेन सहितं तद्वत्स(१)प्तधान्यसमन्वितम् ॥

---

से प्राप्त होता है । मलमास में शुक्लपक्ष की द्वादशी तिथि में अन्नदान करने वाले को तीर्थ-तप-पुण्य-यज्ञ करनेसे क्या ? अर्थात् कोई विशेष प्रयोजन नही है । अधिमास में द्वादशी या पूर्णिमा अथवा व्यतीपात के दिन थोड़े भी दान से महाफल होता है ।

इति पुरुषोत्तममास दान ।

---

## दानात्मक व्रत ।

( क ) भविष्योत्तर–हे युधिष्ठिर ! चैत–वैशाख–जेठ–आषाढ इन चार महीनों में, अथवा ज्येष्ठ आषाढ़ इन दो महीनों में, या केवल ज्येष्ठ एक महीने में, अथवा पक्षमात्र ही बिना मांगे ही जल को देवै । व्रत की समाप्ति होने पर अन्न, वस्त्र और घृत के सहित

---

( १ ) षट्त्रिंशन्मते–यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च । श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् ॥

तिलपात्रं हिरण्यं च ब्रह्मलोके महीयते ।
कल्पान्ते राजराजः स्याद् वारिव्रतमिहोच्यते ॥
श्रावणादिचतुर्मासं प्रातःस्नायी भवेन्नरः ।
विप्राय भोजनं दद्यात्कार्तिक्यां गोप्रदो भवेत् ॥
घृतकुम्भं ततो दत्त्वा सर्वान्कामानवाप्नुयात् ।
वैष्णवव्रतमित्युक्तं विष्णुलोकमवाप्नुयात् ॥
यश्चेन्धनप्रदो राजन् हेमन्तशिशिरव्रती ।
घृतधेनुं प्रयच्छेत्तु परं ब्रह्म स गच्छति ॥
शरीरारोग्यजननं द्युतिकान्तिप्रदायकम् ।
वैश्वानरव्रतं नाम सर्वपाप णाशनम् ॥
सुस्वादुशीतसलिलाक्लमनाशिनी च,

---

सप्तधान्य-[ जव-गेंहू-धान-तिल-काकुन-सांबा-चीना ] तिलपात्र और सुवर्ण-युत मेंटुका देवै, इससे वह ब्रह्मलोक में पूजित होता है और कल्प के अन्त में राजाओं का राजा अर्थात् चक्रवर्ती राजा होता है, यह वारिव्रत कहलाता है। सावन, भादो, आश्विन और कार्तिक इन चार मासों अर्थात् चतुर्मासे में मनुष्य प्रातःकाल स्नान करने वाला हो, एवं ब्राह्मणको भोजन देवै और कार्त्तिक की पूर्णिमा में गोदान तथा घृतकुम्भ दान करे, इससे वह सब कामनाओं को प्राप्त करता है, यह वैष्णवव्रत कहा गया है, इससे विष्णुलोक अर्थात् वैकुंठकी प्राप्ति होती है। हेमन्त शिशिर ऋतु में जो मनुष्य नित्य जलाने की लकड़ी देता है और व्रतान्त में घृतधेनु दान करता है, वह परब्रह्म को प्राप्त होता है। शरीर को आरोग्य करने वाला, शोभा और सौन्दर्य को देने वाला यह वैश्वानर नामक व्रत सब पापों को नाश करनेवाला है।

प्रान्ते पुरस्य पथि पान्थसमाजभूमौ ।
यस्य प्रपा भवति सर्वजनोपभोग्या,
धर्मोत्तरः स खलु जीवति जीवलोके ॥
चैत्ये सुराङ्गणसभाऽऽवसथे सुभव्यां,
येऽग्नीष्टिकां प्रचुरकाष्ठवतीं प्रदद्युः ।
हैमन्तशैशिरऋतौ सुखदां जनानां,
कायाग्निदीपनमलं पुनराप्नुवन्ति ॥

( ख ) आग्नेयपुराणेऽपि—

कार्तिकादौ सका(१)सारमन्नं मासचतुष्टयम् ।

---

गांव के निकट में, रास्ते में और जिस जगह पथिकों का समाज इकट्ठा होता हो वहां, सब जनों के उपभोग करने योग्य और ग्लानि को दूर करने वाला तथा मधुर एवं शीतल जल वाला जिस पुरुष का बनवाया पौशाला है, वह इस जीवलोक में धर्म-प्रधान होकर जीता है। जो लोग हेमन्त शिशिर ऋतु में और घर देवालय सभा और गांव में मनुष्यों को सुख देने वाली लकड़ियों से भरपूर अंगेठी का दान करते हैं, उनकी गत जठराग्नि फिर से खूब तेज होती है।

( ख ) आग्नेयपुराण में भी—कार्तिक, अगहन, पूस और

---

( १ ) कसार इति ख्याते पक्वान्नविशेषे । तत्प्रकारो यथा–घृते तप्ते विनिःक्षिप्य कनिक्यां पाचयेन्मनाक् । ततस्तत्र विनिःक्षिप्य खण्डं भागसमं पचेत् ॥ ततश्चाकृष्य तत्पात्रे क्षिप्त्वा सम्यक्सुचिक्कणे । चतुरस्रीकृतं ह्येतद् भवेत्कासारसंज्ञकम् ॥ प्रक्षिप्य माषशृङ्गाटकशेरूणां पृथक्पृथक् । शालूकस्य चकर्तव्यं कासारं खण्डसर्पिषा ॥ इति ।

फाल्गुनादौ च (१)कृसरमाषाढादौ च (२)पायसम्॥ इति।

## अपुत्रतादोषप्रशमनोपायः।

( ग ) "अपुत्रस्य गतिर्नास्ति स्वर्गं नैव च नैव च" इत्यादिवचनं बह्वार्षग्रन्थेषु दृश्यते। तद्दोषप्रशमनोपायमाह, भविष्योत्तरे—

पुत्रैर्विना शुभगतिर्न भवेन्नराणां,
दुष्पुत्रकैरिति तथोभयलोकनाशः।
एतद्विचार्य सुधिया परिपाल्य वृक्षान्,
पुत्राः पुराणविधिना परिकल्पनीयाः॥
बहुभिर्मृतकैर्जातैः पुत्रधर्मार्थवर्जितैः।

---

माघ, इन चार महीनो में कसार [ चावल आदि के पिसान को तपे हुये घी में थोड़ा भूंजकर पिसान के बराबर शक्कर छोड़कर बना हुआ अन्न विशेष, फाल्गुन, चैत्र, वैशाख और ज्येष्ठ में खिचड़ी-( तिल मिश्रित तंडुल ), आषाढ, सावन, भादो और आश्विन में खीर, ब्राह्मणों को देवै। इति दानात्मक व्रत।

## अपुत्र वालों के लिये उपाय।

( ग ) "जिन के पुत्र नही हैं, उनकी सद्गति और स्वर्ग नही होता" ऐसा वचन बहुत आर्ष ग्रन्थों में देखा गया है, उसके दोष

---

( १ ) कृसरः—तुल्यातिलान्ने। तिलतण्डुलसंपक्कः कृसरः सोऽभिधीयते।

( २ ) पायसः,—क्षीरतण्डुलमिश्रे परमान्ने। अतक्षतण्डुला धौता परिभ्रष्टा घृतेन च। खण्डयुक्तेन दुग्धेन पाचितः पायसो भवेत्॥ इति।

वरमेकं पथि तरुर्यत्र विश्रम(१)ते जनः ॥
पुत्राः संवत्सरस्यान्ते श्राद्धं कुर्वन्ति वा न वा ।
प्रत्यहं पादपाः पुष्टिं श्रेयोऽर्थं जनयन्ति हि ॥ इति दिक् ।

अथोपसंहारः ।

( घ ) एकस्याप्यपकारं यः करोति स नराधमः ।
बहूनामपकाराय संप्रवृत्तः किमुच्यते ॥
दृष्टार्थबाधकं कर्म न कर्तव्यं कथञ्चन ।
अदृष्टं प्रति संदेहः सोऽस्माभिरनुमीयते ॥

---

के शमन का उपाय भविष्योत्तर पुराण में व्यासजी ने कहा— "मनुष्यों की पुत्रों के बिना शुभगति नही होती और दुराचारी पुत्रों से दोनों लोक ( इसलोक परलोक ) का नाश होता है, ऐसा विचारकर समझदारों को, वृक्षोंको लगाकर पुराणोक्तविधिसे पुत्रों की कल्पना करनी चाहिये । मरे हुये, दुराचारी, धर्म और अर्थ से रहित बहुत पुत्रों से कोई प्रजोजन सिद्ध नही होता है, उनसे तो मार्ग में लगाया हुआ एक वृक्ष अच्छा है, जहां मनुष्य विश्राम करता है । क्यों कि पुत्र तो वर्ष की समाप्ति अर्थात् छयाह पर श्राद्ध करे या न करे इसमें भी संदेह है, किन्तु वृक्ष तो नित्य कल्याणार्थ प्राणिमात्रका पोषण किया करते हैं, यह निश्चय है ।"

उपसंहार ।

( घ ) जो एक का भी अपकार करता है, वह पुरुष नराधम है और बहुत लोगों के अपकार में लगा हुआ हो तो उसे क्या कहा जाय ? प्रत्यक्ष में जो बाधक अर्थात् हानिकारक या पापमय है, वह कर्म किसी प्रकार न करना चाहिये । क्यों कि अदृष्ट के प्रति

---

( १ ) गणकार्यमनित्यमिति परिभाषयाऽऽत्मनेपदं बोध्यम् । इति शम् ।

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

वैक्रमेऽग्निग्रहाङ्केन्दौ गोपाष्टम्यां रवेर्दिने ।
समाप्तिमगमत्काश्यां हितेयं दानदीपिका ॥ १ ॥

इति शम् ।

इति पण्डितश्रीकपिलदेवमिश्रसूनुना मिश्रोपाह्वश्रीसुदामा-
शर्म्मणा निर्म्मिता दानदीपिका समाप्ता ।



अर्थात् प्रत्यक्षबाधक कर्म से किसी भविष्य फल या पुण्य की आशा करना संदेह-ग्रस्त है और वह केवल अपना अनुमान मात्र है निश्चित नही है ।

सम्पूर्ण अट्ठारहों पुराणों में व्यासजी के केवल दो ही वचन हैं कि यदि पुण्य करना हो तो दूसरों का उपकार करे और पाप करना हो तो दूसरों को सतावे।

शुभ संवत् १९९३ कार्तिक शुक्ल अष्टमी ( गोपाष्टमी ) रविबार को काशीमें सबका हित करने वाली यह दानदीपिका समाप्त हुई ।

इति शम् ।

पंडित सुदामा मिश्र कृत दानदीपिका की भावबोधिनी
भाषा टीका समाप्त हुई ।

* श्रीः *

## धान्यादिदातृभ्यो जनेभ्यः शुभाऽऽशंसनम् ।

शेषाशेषसदुक्तियुक्तिकुशलो यः साहितीसारविद्,
मीमांसानयसांख्यसाररसिको वेदान्तशान्तान्तरः ।
श्रौताऽऽचारपरम्पराप्रतिफलत्तेजोविशेषोज्ज्वलो,
भट्टाचार्यपदाङ्कितो विजयते हाराणचन्द्रः सुधीः ॥१॥
तत्पादाम्बुजनिर्गलन्मधुसुधाधाराररसास्वादनात्,
सान्द्रानन्दसमृद्धिशुद्धमनसा प्रेम्णा सुदाम्ना कृता ।
कालेऽस्मिन्कलिसङ्कुले वितरतां धान्यादिकं श्रद्धया,
धर्म्मप्रविवर्द्धनाय कुशला भूयादियं दीपिका ॥ २ ॥

---

## एतद्ग्रन्थप्रणयनदत्तोत्साहाय राजर्षिवराय शुभाशीर्वचनम् ।

यस्याश्रयेण सुजनः सौजन्यजन्यफलमावहति ।
सोऽयं शशिधरसिंहः सदैधतां सतां मुदे जगति ॥१॥

अयम्महीपः परमप्रतापः—
समस्वभावः कमनीयभावः ।
दानेन मानेन च राजमान-
श्चिरायुरास्तां जगतीतलेऽस्मिन् ॥२॥

यदीयाज्ञाऽनुरूपेण दीपिका विहिता मया ।
तदधीनां प्रकुर्वे तां जगतां श्रेयसे सदा ॥ ३ ॥